# चन्दमामा

सम्पुटः - १७ मार्च् - २००१ सञ्चिका - १२



## अन्तरङ्गम्

**कथाः**



Printed and Published by B. Viswanatha Reddi at B. N. K Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Ltd., No - 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

## एतस्य अङ्कस्य विशेषाः



योग्यः वरः (वेतालकथा)

यक्षपर्वतः



भारत-गौरव-गाथा



राजमार्गः



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अचोदयत् - prompted
अनिर्बन्धशरणागतिः - unconditional surrender
अपर्याप्तता - insufficiency
अभ्युपगमः - acceptance
अलिप्तदेशः - non allied country
अवरुद्धम् - blocked
असङ्गतम् - irrelevant
असन्तुष्टिः - unhappiness
आक्रामकः - invader
आसन्नप्रसवा - a cow about to deliver
आसादितः - gained
उदात्तः - noble
उपयुञ्जानः - user
क्रकचम् - hack-saw
क्लिन्नः - drenched
क्षुवः - sneezing
गोणी - sack
गुञ्जति - bugging
च्यावयितुम् - to remove
जनप्रियता - popularity
तक्षकः - carpenter
तारागोलकम् - planetorium
निकृष्टः - ugly
पर्यायव्यवस्था - alternative arrangement
प्रक्रिया - process
मुद्गरः - hammer
मृद्गोलकम् - mudball
यापनम् - spending
लक्षितवान् - noticed
लोहकारः - blacksmith
वास्तुवित् - a person who know 'vastu'
विमाता - step mother
श्रोता - listner
सपत्नी - fellow wife
सम्भावना - possibility
सस्यमञ्जरी - a cluster of sprouts
संविधानम् - constitution
सावधानः - alert



*संस्थापकौ –*

**चक्रपाणिः नागिरेड्डी च**

# कुत्र समयः पुस्तकपठनार्थम् ?

बालेषु पठनप्रवृत्तिः क्षीयमाणा अस्ति इति वचनं प्रायः सर्वत्र श्रूयते । त्रिदशकेभ्यः पूर्वं मातापितरः 'दूरदर्शनम् एतस्याः प्रवृत्तेः कारणम्' इति कथयन्ति स्म । अधिकाधिककालं दूरदर्शनस्य पुरतः उपविशतां बालानां कुत्र समयः पठनार्थम् ? इति ते अधिक्षिपन्ति स्म । अत्र पठनशब्देन पाठ्येतरपुस्तकस्य पठनम् अभिप्रेतम् । दशकद्वयात् पूर्वं भारते सर्वेषु गृहेषु दूरदर्शनं कौतुकविषयः आसीत् । मातापितरः अपि प्रायः दूरदर्शनदर्शनेन एव अधिककालं यापयन्ति स्म । बालानां मनोविनोदार्थं पर्यायव्यवस्थाम् अकुर्वतां, स्वयं दूरदर्शनम् आधिक्येन पश्यतां मातापितॄणां कः अधिकारः बालानां निन्दने ?

सप्तमे दशके सोवियत्देशे किञ्चन सर्वेक्षणं कृतम् । तत् ज्ञापयति यत् दूरदर्शनं बालानां ज्ञानवर्धने नितराम् उपकारकम् इति । यत् पुस्तकानि न कुर्युः तत् ज्ञानवर्धनकार्यं करोति दूरदर्शनम् इति वदति तत् । वस्तुतः एतत् बालकानां, ग्रन्थकाराणां, प्रकाशनकाराणां च नेत्रोन्मीलकम् अस्ति ।

अनन्तरकाले मातापितरः इलेक्ट्रानिक्स्क्षेत्रस्य निन्दनम् आरब्धवन्तः । सङ्गणक-अन्तर्जालव्यवस्थादयः बालानां मनः पुस्तकात् निवारयन्ति इति ते उक्तवन्तः । 'सङ्गणकादीनां कारणतः बालाः पठनार्थं समयम् एव न प्राप्नुवन्ति । यत् ज्येष्ठैः अपि द्रष्टुं योग्यं न, तादृशान् अंशान् बालाः पश्यन्ति । अन्तर्जालादिद्वारा, नैरन्तर्येण सङ्गणकस्य पुरतः उपवेशनात् च बालानां दृष्टिशक्तिः क्षीणतां याति' इति वदन्ति मातापितरः ।

एषु दिनेषु महानगरद्वये पक्षावधिका पुस्तकमेला प्रवृत्ता । तत्र बालाः पुस्तकक्रयणे अत्यासक्तिं दर्शितवन्तः दृष्टाः । एतस्मात् स्पष्टं यत् बालाः पुस्तकासक्तिं, पठनाभिरुचिं च न विस्मृतवन्तः इति ।

अतः पुस्तकानां जनप्रियता कदापि न अस्तं गच्छति इति सिद्धम् ।

# वार्ताविशेषः




## सहस्राब्दीविषयकः विवादः

सहस्राब्दीविषयकः विवादः, यश्च गतायां सहस्राब्द्याम् अपि न परिहृतः, सः गते वर्षे समाप्तिं गतः । नूतना सहस्राब्दी द्विसहस्रतमवर्षस्य जनवरीमासे आरब्धः, उत एकोत्तर-द्विसहस्रतमवर्षस्य जनवरीमासे इति महान् विवादः आसीत् । प्रसिद्धः विज्ञानलेखलेखकः आर्थर् सि. क्लर्क्वर्यः सप्रमाणम् उक्तवान् अस्ति यत् तृतीयसहस्राब्द्याः वास्तविकः आरम्भः ०१. ०१. २००१ दिनाङ्के जातः इति । 'ये द्विसहस्रतम-वर्षस्य जनवरीमासस्य प्रथमे दिनाङ्के नूतनसहस्राब्द्याः आरम्भम् उक्तवन्तः तैः किञ्चिदिव त्वरा दर्शिता' इति अभिप्रैति सः । नवसहस्राब्द्याः आरम्भं, गतसहस्राब्द्याः अन्त्यं च अधिकृत्य स्पष्टीकरणम् अपेक्षमाणैः लिखितानां पत्राणां प्रवाहः एव तेन प्राप्तः । अतः वयम् आशास्महे यत् सहस्रवर्षाणाम् अनन्तरं, तन्नाम त्रिसहस्रतमे वर्षे, एकोनत्रिसहस्रतमे वर्षे च एतादृशः भ्रमः न सम्भवेत् इति ।

## अहो, क्षुवपरम्परा !!



मोरक्कोनगरीयः त्रयोदशवर्षीयः बालकः कदाचित् निरन्तर-क्षुवम् आरब्धवान् । सः षड्दिनाभ्यन्तरे १,१०० वारं क्षुवं कृतवान् । केषुचित् दिनेषु सः २०० वारं क्षुवं कृतवान् । नवविक्रमस्य साधनं तस्य उद्देशः न आसीत् । किन्तु नवविक्रम-योग्याम् एतां घटनां दृष्ट्वा वैद्याः अपि आश्चर्यचकिताः । एतां क्षुवपरम्परां स्थगयितुं बहुधा प्रयत्नं कृतवन्तः ते । अन्ते निद्राजनकम् औषधं दत्त्वा सा क्षुवपरम्परा तैः कथञ्चित् स्थगिता ।

## नूतनसहस्राब्द्याः प्रथमकूर्दनम्

केचन कूर्दनपटवः मलेशियादेशस्य राजधान्यां कौलालम्पूरनगरे स्थितस्य पेट्रोनस्युगल-भवनस्य शिखरतः (३९० मीटर्-उन्नतात्) द्विसहस्रतमवर्षस्य अन्तिमे क्षणे कूर्दनं कृतवन्तः । यावत् ते भूतलं प्राप्तवन्तः तावता नूतनसहस्राब्दी आरब्धा आसीत् । एते कूर्दनकाराः अमेरिका, जर्मनी, स्वीडन्, सौदि-अरेबिया इत्यादिभ्यः देशेभ्यः समागताः आसन् ।



## आश्चर्यकरं तरणम्

विंशतिवर्षीयः श्यामप्रबोधिनी स्वस्य हस्तौ पादौ च बद्ध्वा केरलीये समुद्रजले आत्मानं पातितवान् । सः जले निमग्नः एव नवदश-निमेषाभ्यन्तरे ३ की. मी. दूरम् अतिक्रान्तवान् । यदा सः प्रयाणं समापितवान् तदा अपि रज्जवः यथापूर्वम् एव, तन्नाम अशिथिलाः एव आसन् । एतत् अपायकारितरणं समाप्य यदा सः तीरं प्राप्तवान् तदा सहस्रशः जनाः आश्चर्येण तं पश्यन्तः हर्षध्वनिं कृतवन्तः ।

## गणिताध्यापकविषये अनुत्तमः अभिप्रायः

सहस्राब्दीविषयकरहस्यस्य उद्भेदनार्थं सामान्या गणितप्रक्रिया आर्थर्क्लर्क्वर्यस्य साहाय्यम् अकरोत् । अतः भवन्तः प्रायः क्लर्क्वर्यात् एव गणितं ज्ञातुम् इच्छेयुः न तु गणितशिक्षकात् । वस्तुतः गणितशिक्षकविषये छात्राणाम् अभिप्रायः उत्तमः न भवति इति वदति कस्यचित् इंग्लेण्डीय-विश्वविद्यालयस्य सर्वेक्षणम् । सर्वेक्षणकर्तृभिः १२-१३ वर्षीयाः ३०० बालाः सूचिताः यत् भवन्तः स्वस्य गणिताध्यापकस्य चित्रं स्वकल्पनानुगुणं लिखन्तु इति । तैः लिखितेषु अधिकसंख्याकानि चित्राणि अध्यापकानां गौरववर्धकानि न आसन् । कैश्चित् स्वस्य अध्यापकः खल्वाटत्वेन, अन्यैः कैश्चित् श्मश्रुलत्वेन, उपनेत्रधारित्वेन, ललाटरेखायुक्तत्वेन, वक्रभ्रूसमेतत्वेन, भृकुटित्वेन च चित्रितः आसीत् । कैश्चित् चित्रस्य अधः वाक्यानि अपि लिखितानि आसन् - 'अपरगणितज्ञात् ऋते गणितज्ञस्य सुहृत् अन्यः कोऽपि न भवति', 'गणितज्ञाः शीघ्रकोपिनः', 'तेषां सामाजिकजीवनं शून्यप्रायम्', 'भयम् उत्पाद्य ते छात्रद्वारा गणितं कारयन्ति' इत्यादीनि । गणिताध्यापकानाम् उत्तमं चित्रं छात्रेषु यथा अङ्कितं भवेत् तथा कर्तुं प्रयतमानाः सन्ति संशोधकाः । ते च ३०० छात्राः ब्रिटन्, स्वीडन्, नार्वे, फिन्ल्याण्ड्, जर्मनी, रोमेनिया, अमेरिका इत्यादिभ्यः देशेभ्यः चिताः आसन् ।



# गुजरातराज्ये भूकम्पः ...

जनवरीमासस्य २६ तमे दिनाङ्के समग्रे देशे आसीत् गणराज्योत्सवस्य उत्साहः । सर्वेषु राज्येषु, नगरेषु, ग्रामेषु, जनपदकेन्द्रेषु च तस्य उत्सवस्य निमित्तम् आसीत् महान् सन्नाहः । राष्ट्रभक्तिसुखं साभिमानं सानन्दं च अनुभवितुं जनाः प्रत्यक्षभागग्रहणाय, दूरदर्शनद्वारा प्रसार्यमाणस्य वार्ताचित्रस्य दर्शनाय वा उद्युक्ताः आसन् । तावता प्रवृत्ता काचित् अतिघोरा दुर्घटना – गुजरातराज्ये भूकम्पः नाम । गतेषु पञ्चसहस्रवर्षेषु गुजरातेतिहासे एतादृशी महादुर्घटना न दृष्टा आसीत् । एतत्कारणतः देशे जनानाम् आनन्दमनःस्थितिः झटिति नष्टा । गुजरातराज्यं तु विलापमयं जातम् ।

उत्सवाचरणात् किञ्चित् पूर्वं प्रवृत्ता एषा दुर्घटना नगराणि अनाशयत्, भवनानि अपातयत्, मानवजीवितानि अपिबत् च । एतत्कारणतः तत्र जातायाः हानेः परिमाणं कियत् इति इतोऽपि स्पष्टं न जातम् । तथापि तत्र जाता हानिः अपारा इत्यत्र तु नास्ति सन्देहः । लक्षशः जनाः मृताः स्युः, कोटिशः जनाः गृहहीनाः जाताः स्युः । ये सजीवं स्थितवन्तः, ये च कथञ्चित् प्राणरक्षणे समर्थाः जाताः, तेषु व्रणितानां विकलाङ्गतां गतानां च सङ्ख्या अपारा । सहस्रशः जनाः न दृश्यन्ते ! अनाथतां गतानां बालानां तु आकाशः एव शरणम् इदानीम् !!

भुज्नगरं, कच्छजनपदस्य अञ्जार-रापर-भच्छु-प्रभृतीनि नगराणि, राजधानी कर्णावती (अहमदाबाद्), अन्ये असङ्ख्याः ग्रामाः च भूकम्पतः नाशं गताः सन्ति । भूमेः अधोभागे स्थितस्य शिलास्तरस्य कम्पनतः एतादृशाः भूकम्पाः जायन्ते इति अभिप्रयन्ति भूगर्भ-शास्त्रज्ञाः । भुज्प्रदेशः आ बहोः कालतः भूकम्पसम्भवयुक्तप्रदेशत्वेन परिगणितः अस्ति ।

पुनरुज्जीवितं द्वारकामन्दिरं भूकम्पकारणतः क्षतिग्रस्तं जातम् इति श्रूयते । भुज्नगरस्थः ऐतिहासिकवस्तुसङ्ग्रहालयः विनष्टः इति ज्ञायते । एतादृशानि अनेकानि ऐतिहासिकस्मारकाणि नामावशेषतां गतानि सन्ति । तत्रत्यं जनजीवनं पुनर्व्यवस्थापयितुं समरकाले इव कार्याणि महता वेगेन प्रचलन्ति । लक्षशः स्वयंसेवकाः, वैद्याः, अनेकानि यन्त्राणि च तत्र सामान्यवासभोजनादिकस्य व्यवस्थापने निरताः सन्ति ।

चण्डमारुतः, चक्रवातः, झञ्झावातः, भूकम्पः इत्यादयः मानवजीवितनाशं न परिगणयन्ति । आधुनिकानि विज्ञानतन्त्रज्ञानसाधनानि एतादृशानां सम्भवस्य पूर्वसूचनां प्राप्तुं प्रयतन्ते । किन्तु तत्क्षेत्रे अद्यावधि प्राप्ता सिद्धिः तावत् अत्यल्पा एव ।

गुजरातराज्यं भारतस्य अङ्गम् । तत्र कष्टस्थितौ स्थिताः जनाः अस्माकं भ्रातरः एव । असहायस्थितिम् आपन्नानां, दिग्भ्रान्तानाम् अस्मद्भ्रातॄणां साहाय्यार्थं वयं प्रधानमन्त्रि-राष्ट्रसुरक्षानिधये (द्वारा - प्रधानमन्त्रिकार्यालयः नवदेहली - ११००११) यथाशक्ति धनम् अर्पयन्तः राष्ट्रियविपदाम् एतां सम्मुखीकर्तुं प्रधानमन्त्रिणः शक्तिं वर्धयाम ।

– प्रकाशकः

# वेताल-कथा

## योग्यः वरः

दृढव्रतः कृतनिश्चयः त्रिविक्रमः पुनश्च वृक्षम् आरुह्य शवम् अवतार्य स्कन्धे आरोप्य पूर्ववत् श्मशानस्य दिशि प्रस्थितवान् । तदा शवान्तर्गतः वेतालः – ''राजन्, एषः अर्धरात्रसमयः । स्थलं तु श्मशानम् । अत्र भूतप्रेतादयः सञ्चरन्तः भवन्ति । यदाकदाचिदपि अत्र आपदः सम्मुखीकरणीयाः भवेयुः । प्राणानाम् आशा अपि परित्यक्तव्या भवेत् । तथापि कस्याः समस्याः समाधानार्थं भवान् एतादृशं महान्तं परिश्रमं कुर्वन् अस्ति अत्र ? भवान् श्मशान-त्यागस्य विचारमेव परित्यक्तवान् अस्ति इति

# गुजरातराज्ये भूकम्पः ...

जनवरीमासस्य २६ तमे दिनाङ्के समग्रे देशे आसीत् गणराज्योत्सवस्य उत्साहः । सर्वेषु राज्येषु, नगरेषु, ग्रामेषु, जनपदकेन्द्रेषु च तस्य उत्सवस्य निमित्तम् आसीत् महान् सन्नाहः । राष्ट्रभक्तिसुखं साभिमानं सानन्दं च अनुभवितुं जनाः प्रत्यक्षभागग्रहणाय, दूरदर्शनद्वारा प्रसार्यमाणस्य वार्ताचित्रस्य दर्शनाय वा उद्युक्ताः आसन् । तावता प्रवृत्ता काचित् अतिघोरा दुर्घटना - गुजरातराज्ये भूकम्पः नाम । गतेषु पञ्चसहस्रवर्षेषु गुजरातेतिहासे एतादृशी महादुर्घटना न दृष्टा आसीत् । एतत्कारणतः देशे जनानाम् आनन्दमनःस्थितिः झटिति नष्टा । गुजरातराज्यं तु विलापमयं जातम् ।

उत्सवाचरणात् किञ्चित् पूर्वं प्रवृत्ता एषा दुर्घटना नगराणि अनाशयत्, भवनानि अपातयत्, मानवजीवितानि अपिबत् च । एतत्कारणतः तत्र जातायाः हानेः परिमाणं कियत् इति इतोऽपि स्पष्टं न जातम् । तथापि तत्र जाता हानिः अपारा इत्यत्र तु नास्ति सन्देहः । लक्षशः जनाः मृताः स्युः, कोटिशः जनाः गृहहीनाः जाताः स्युः । ये सजीवं स्थितवन्तः, ये च कथञ्चित् प्राणरक्षणे समर्थाः जाताः, तेषु व्रणितानां विकलाङ्गतां गतानां च सङ्ख्या अपारा । सहस्रशः जनाः न दृश्यन्ते ! अनाथतां गतानां बालानां तु आकाशः एव शरणम् इदानीम् !!

भुज्नगरं, कच्छजनपदस्य अञ्जार-रापर-भच्छु-प्रभृतीनि नगराणि, राजधानी कर्णावती (अहमदाबाद्), अन्ये असङ्ख्याः ग्रामाः च भूकम्पतः नाशं गताः सन्ति । भूमेः अधोभागे स्थितस्य शिलास्तरस्य कम्पनतः एतादृशाः भूकम्पाः जायन्ते इति अभिप्रयन्ति भूगर्भ-शास्त्रज्ञाः । भुज्प्रदेशः आ बहोः कालतः भूकम्पसम्भवयुक्तप्रदेशत्वेन परिगणितः अस्ति ।

पुनरुज्जीवितं द्वारकामन्दिरं भूकम्पकारणतः क्षतिग्रस्तं जातम् इति श्रूयते । भुज्नगरस्थः ऐतिहासिकवस्तुसङ्ग्रहालयः विनष्टः इति ज्ञायते । एतादृशानि अनेकानि ऐतिहासिकस्मारकाणि नामावशेषतां गतानि सन्ति । तत्रत्यं जनजीवनं पुनर्व्यवस्थापयितुं समरकाले इव कार्याणि महता वेगेन प्रचलन्ति । लक्षशः स्वयंसेवकाः, वैद्याः, अनेकानि यन्त्राणि च तत्र सामान्यवासभोजनादिकस्य व्यवस्थापने निरताः सन्ति ।

चण्डमारुतः, चक्रवातः, झञ्झावातः, भूकम्पः इत्यादयः मानवजीवितनाशं न परिगणयन्ति । आधुनिकानि विज्ञानतन्त्रज्ञानसाधनानि एतादृशानां सम्भवस्य पूर्वसूचनां प्राप्तुं प्रयतन्ते । किन्तु तत्क्षेत्रे अद्यावधि प्राप्ता सिद्धिः तावत् अत्यल्पा एव ।

गुजरातराज्यं भारतस्य अङ्गम् । तत्र कष्टस्थितौ स्थिताः जनाः अस्माकं भ्रातरः एव । असहायस्थितिम् आपन्नानां, दिग्भ्रान्तानाम् अस्मद्भ्रातॄणां साहाय्यार्थं वयं प्रधानमन्त्रि-राष्ट्रसुरक्षानिधये (द्वारा - प्रधानमन्त्रिकार्यालयः नवदेहली - ११००११) यथाशक्ति धनम् अर्पयन्तः राष्ट्रियविपदाम् एतां सम्मुखीकर्तुं प्रधानमन्त्रिणः शक्तिं वर्धयाम ।

– प्रकाशकः

## वेताल-कथा

# योग्यः वरः

दृढव्रतः कृतनिश्चयः त्रिविक्रमः पुनश्च वृक्षम् आरुह्य शवम् अवतार्य स्कन्धे आरोप्य पूर्ववत् श्मशानस्य दिशि प्रस्थितवान् । तदा शवान्तर्गतः वेतालः – ''राजन्, एषः अर्धरात्रसमयः । स्थलं तु श्मशानम् । अत्र भूतप्रेतादयः सञ्चरन्तः भवन्ति । यदाकदाचिदपि अत्र आपदः सम्मुखीकरणीयाः भवेयुः । प्राणानाम् आशा अपि परित्यक्तव्या भवेत् । तथापि कस्याः समस्याः समाधानार्थं भवान् एतादृशं महान्तं परिश्रमं कुर्वन् अस्ति अत्र ? भवान् श्मशान-त्यागस्य विचारमेव परित्यक्तवान् अस्ति इति



भाति । केचन साधारणसमस्याम् अपि 'असाधारणसमस्या' इति भावयन्ति, कष्टम् अनुभवन्ति च । अत्र तेषां बुद्धिशक्तेः अभावः कारणं न, अपि तु अनुभवशून्यता कारणम् । भवान् तादृशं दोषं तु कुर्वन् नास्ति खलु । भवन्तं जागरयितुं कस्यचित् दरिद्रस्य पुत्र्याः मालत्याः कथां श्रावयामि । सा अविचार्य एव भाग्यं तिरस्कृत्य स्वजीवनस्य नाशं स्वयं कृतवती । श्रमपरिहारार्थं तां कथां शृणोतु'' इति वदन् कथाम् आरब्धवान् -

विन्ध्याचलस्य अरण्यसमीपे कश्चित् काष्ठविक्रेता पुत्र्या मालत्या सह वसति स्म । मालती बाल्ये एव मातृवियोगं प्राप्तवती आसीत् । पुत्र्याः विवाहस्य चिन्ता काष्ठ-विक्रेतारं निरन्तरं बाधते स्म ।

एकदा समीपस्थग्रामे एव वसन्ती तस्य अग्रजा अस्वस्था अभवत् । तां द्रष्टुं परेद्यवि प्रातः एव सः गृहात् प्रस्थितवान् । गमनसमये सः पुत्रीम् आहूय अवदत् - ''अस्माकं धेनुः आसन्नप्रसवा इति कारणतः एकाकिनीं भवतीं परित्यज्य अग्रजां द्रष्टुं गच्छन् अस्मि । अहं रात्रितः पूर्वमेव प्रत्यागमिष्यामि'' इति ।

स्नानं कृत्वा केशान् शोषयन्ती अङ्गणे इतस्ततः सञ्चरन्ती आसीत् मालती । तावता आकाशः मेघैः आवृत्तः । शीतलवायुः वाति स्म । सा मल्लिकापुष्पाणि स्वीकृत्य मालां रचयन्ती मन्दस्वरेण गायति स्म । गीतस्य समापनसमये एव तया पुष्पमाला अपि रचिता आसीत् । यदा सा पुष्पमालां वेण्यां धरन्ती आसीत् तदा कस्यचित् तरुणस्य ध्वनिः श्रुतः - ''भवत्याः कण्ठस्वरं श्रुत्वा कोकिलः लज्जाम् अनुभवेत् । अहो, सुमधुरः कण्ठः भवत्याः'' इति । एतत् श्रुत्वा भीत्या सा कम्पमाना जाता ।

यदा सा मुखं परिवर्त्य दृष्टवती, तदा सः तरुणः स्वस्य परिचयं वदन् - ''मम नाम शार्ङ्गपाणिः । अहं सङ्गीतप्रेमी । भवत्याः मधुरकण्ठं श्रुत्वा मुग्धः अभवम् । भवत्याः कण्ठश्रवणस्य अवसरः लब्धः यत् तत् तु मम सौभाग्यम्'' इति अवदत् ।

प्रत्युत्तरं दातुम् असमर्था मालती किङ्कर्तव्यतामूढा अभवत् । तावता महती वृष्टिः आरब्धा । मालती तं तरुणम् उद्दिश्य - ''हा हन्त ! भवान् तु पूर्णरूपेण क्लिन्नः भवेत् । अन्तः आगच्छतु तावत्'' इति वदन्ती अन्तः आगन्तुं निमन्त्रणं दत्तवती ।

शार्ङ्गपाणिः धावन् एव कुटीरं प्रविष्टवान् ।

विशालं स्वच्छं कुटीरं दृष्ट्वा सः - ''बहु सुन्दरं कुटीरम् एतत् । अरण्ये एकाकितया स्थातुं भवती भयं न अनुभवति किम् ?'' इति अपृच्छत् ।

तदा मालती - ''अहं तु अत्रैव जाता । अत्र मम भयं किमर्थम् ? मया सह मम पिता अपि वसति खलु'' इति अवदत् । सा रज्जुभिः निर्मितं मञ्चं तस्मै उपवेशनाय दत्तवती ।

तावता कुटीरस्य बहिः कस्यचित् स्वरः श्रुतः - ''अन्तः कोऽपि अस्ति किम् ? किम् अहम् अन्तः आगन्तुं शक्नोमि ?'' इति ।

मालती द्वारम् उद्घाट्य यदा दृष्टवती तदा तत्र मन्मथः इव अतिसुन्दरः कश्चन युवकः स्थितवान् आसीत् । सा तस्य स्वागतं कुर्वती - ''अन्तः आगच्छतु । भवान् क्लिन्नः अभवत् खलु !!'' इति उक्तवती ।

अरण्ये तादृशीं सुन्दरीं दृष्ट्वा आश्चर्यचकितः आसीत् सः । आत्मनिग्रहं कुर्वन् सः - ''मम नाम कपिलः इति । मित्रस्य विवाहार्थं प्रस्थितवान् आसम् । वृष्ट्या मम गमनम् अवरुद्धम् अभवत्'' इति उक्तवान् ।

मालती तम् उद्दिश्य - ''एषः अपि भवादृशः एव । वृष्टिकारणतः अत्र आगतवान्'' इति वदन्ती शार्ङ्गपाणि-कपिलयोः परस्परं परिचयं कारितवती ।

तावता कश्चन तृतीयः तरुणः अपि तत्र प्रविष्टवान् । सः - ''अनुमतिं विना अन्तः प्रविशन् अस्मि । अतः क्षमां याचे'' इति उक्तवान् । सः अपि पूर्णरूपेण क्लिन्नः आसीत् ।



तं दृष्ट्वा मालती किमपि वक्तुम् उद्युक्ता । तावता एव सः - ''मम नाम भीमशङ्करः । वाणिज्यार्थं नगरं प्रति प्रस्थितवान् आसम् । मार्गे वृष्टिः आगता । न जाने, एषा कदा स्थगिता भवेत् इति'' इति ।

किञ्चित्कालानन्तरं वृष्टिः स्थगिता अभवत् । शार्ङ्गपाणिं प्रेषयितुं यदा मालती बहिः आगतवती तदा सः - ''भवत्याः मृदुमधुरं गीतम् इदानीमपि मम कर्णयोः गुञ्जति । अहं भवतीम् इष्टवान् अस्मि । भवत्याः पित्रा सह वार्तालापं कर्तुम् अहं मम अग्रजं श्वः प्रेषयिष्यामि'' इति मन्दस्वरेण कथयित्वा ततः निर्गतवान् ।

गमनात् पूर्वं कपिलः अपि रहसि - ''भवत्याः सौन्दर्यम् अद्वितीयम् अस्ति । 'मम सौन्दर्येण तुल्या काचित् लभ्येत उत न' इति



मम समस्या आसीत् । सा समस्या परिहृता । आवयोः विवाहस्य विषये वार्तालापं कर्तुं श्वः एव मम मातापितरौ प्रेषयिष्यामि'' इति उक्त्वा ततः गतवान् ।

भीमशङ्करः अपि गमनात् पूर्वं तां निर्निमेषं पश्यन् – ''अहं भवतीं बहु इष्टवान् अस्मि । अहं कश्चित् महावणिक् । लक्षशः रूप्यकाणां व्यवहारः मम । मम वाणिज्यस्य निर्वहणार्थं बहवः कर्मकराः सन्ति । वाणिज्येन यदा मया नीरसता अनुभूयते तदा अत्र आगत्य विश्रान्तिसुखम् अनुभवन् भवत्या सह जीवनं यापयिष्यामि । श्वः एव मम मातरं बन्धुभिः सह अत्र विवाहवार्तालापार्थं प्रेषयिष्यामि'' इति उक्त्वा निर्गतवान् ।

सायं मालत्याः पिता प्रत्यागतवान् । मालती पितृभगिन्याः आरोग्यविषये पृष्टवती ।

तदा सः – ''इतःपरम् अधिकानि दिनानि सा न जीवति इति भाति । 'एकमात्रस्य पुत्रस्य विवाहं पश्यामि उत न इत्येव तस्याः चिन्ता'' इति अवदत् ।

तदा मालती – ''एतदर्थं किमर्थं दुःखम् अनुभवति सा ? योग्ययुवत्या सह पुत्रस्य विवाहं निर्वोढुं शक्यं खलु'' इति अवदत् ।

एतत् श्रुत्वा मालत्याः पिता उक्तवान् – ''स्वपुत्रस्य विवाहविषये मम भगिन्या कृतं चिन्तनं दोषपूर्णम् आसीत् । सा चिन्तयन्ती आसीत् यत् वरदक्षिणारूपेण बहुधनं लप्स्यते इति । किन्तु तस्याः इदानीं निराशा जाता अस्ति । अहम् अपि तस्याः पुत्रेण सह भवत्याः विवाहप्रस्तावं कर्तुं भयम् अनुभवामि स्म । यतः वरदक्षिणादानस्य सामर्थ्यं मम सर्वथा नास्ति । इदानीं सा एव वदन्ती अस्ति यत् मालती यदि मम स्नुषा भवेत् तर्हि सुखेन निश्चिन्ततया मरणं प्राप्नुयाम् इति । अहम् अपि अङ्गीकृतवान् । एषः विवाहप्रस्तावः भवत्या अनुमतः, उत न इति तस्याः पुत्रः रमापतिः ज्ञातुम् इच्छति'' इति ।

तदा मालती मन्दहासपूर्वकम् उक्तवती – ''अद्य प्रातः अत्र महती वृष्टिः अभवत् । वृष्ट्या क्लिन्नाः त्रयः तरुणाः कुटीरं प्रति आश्रयप्राप्त्यर्थम् आगताः आसन् । तेषु प्रथमः सङ्गीतप्रियः, द्वितीयः बहुसुन्दरः, तृतीयः वणिक् च । ते सर्वे अपि मम विवाहस्य अपेक्षां प्रकटितवन्तः । भवता सह वार्तालापार्थं ते स्वजनान् श्वः प्रेषयिष्यन्ति'' इति ।

तदा मालत्याः पिता - ''एवम् ! तर्हि ते निश्चयेन धनिकाः स्युः । अर्थहीनवचनानि वदन्तं रमापतिं विस्मरतु । तेषु त्रिषु भवती कं योग्यं भावयति ?'' इति पृष्टवान् ।

विनाविलम्बं मालती पितरम् उक्तवती - ''अहं रमापतिम् एव परिणेष्यामि'' इति ।

वेतालः एवं कथां श्रावयित्वा अवदत् - ''राजन्, एतत् तु स्पष्टम् अस्ति यत् मालत्या अविचार्य निर्णयः स्वीकृतः इति । ते त्रयः अपि युवकाः धनिकाः गुणिनः च । मालत्या तेषु कश्चित् परिणेतव्यः आसीत् । सा एवं यदि अकरिष्यत् तर्हि स्वस्य अग्रिमं जीवनं सुखेन यापयितुम् अशक्ष्यत् । किन्तु एवम् अकृत्वा सा विद्याविहीनेन रमापतिना परिणीता भवितुम् सिद्धा अभवत् । एवं किमर्थं कृतं तया ? जीवने सहपथिकस्य चयनं कष्टकरम् एव । भाग्यं तिरस्कृत्य स्वस्य भविष्यम् अन्धकारमयं कृतवती सा । स्वस्य भविष्यं नाशितवती अपि । एवं ननु ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''का समस्या क्लिष्टा, का सरला इति निर्णयः निर्णय-स्वीकर्तुः मानसिकस्थितिम् अवलम्बते । स्वानुभवेन एव ते विवेकपूर्णं निर्णयं कुर्वन्ति । पितुः प्रश्नस्य उत्तरदाने मालत्या विलम्बः न कृतः एव । क्षणाभ्यन्तरे 'रमापतिना परिणीता भविष्यामि' इति स्वनिर्णयं श्रावितवती सा । यतः तस्याः दृष्ट्या सा अत्यन्तं साधारण-समस्या । ये त्रयः तां परिणेतुं सिद्धाः आसन् । किन्तु तेषु कोऽपि तस्याः मनसि किम् अस्ति इति अवगन्तुं प्रयत्नं न कृतवान् । तस्याः का इच्छा इत्यपि न पृष्टवान् । तेषां दृष्ट्या सः विषयः गौणः आसीत् । एतेषु कोऽपि परिणीतः चेत् तस्याः जीवनं कथं भवेत् इति किं पुनः वक्तव्यम् ? ते तस्यै अर्धाङ्गिनी-स्थानम् अदत्त्वा तां दासीस्थाने स्थापयेयुः अपि । अतः एव सा तेषु कमपि न परिणीतवती । तया न स्वस्य भविष्यं नाशितं, न वा भाग्यं तिरस्कृतम्'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः इत्यतः वेतालः शवसहिततया ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# एतन्मासे जातः राष्ट्रनायकः



## राममनोहरलोहियः

१९३३ तमे वर्षे मद्रास्नगरे दृष्टम् एकं दृश्यम् । कश्चित् तरुणः डाक्टरेट्पदवीं प्राप्य जर्मनीतः आगत्य विमानात् अवतीर्णः । विदेशं गन्तुं, तत्र अध्ययनं कर्तुं च बान्धवाः साहाय्यं कृतवन्तः आसन् । भारतम् आगतस्य तस्य समीपे जन्मस्थानं प्राप्तुं धनं न आसीत् । सः चिन्ताग्रस्तः । अत्रान्तरे कश्चन उपायः स्फुरितः । सः 'हिन्दु'पत्रिकाकार्यालयं गतवान् । 'अहम् एकं लेखं लिखित्वा ददामि चेत् किं भवद्भिः मह्यं गौरवधनं दीयेत ?' इति सः अपृच्छत् । सम्पादकेन उक्तम् - 'आम्' इति । सः तत्रैव उपविश्य एकं राजनैतिकलेखं लिखितवान् । तदर्थं प्राप्तं गौरवधनं प्रयाणचिटिकायाः क्रयणे साहाय्यम् अकरोत् ।

सः एव आसीत् राममनोहरलोहियः । अग्रिमे काले सः श्रेष्ठसमाजवादिनायकत्वेन, राजनेतृत्वेन, मेधावित्वेन च ख्यातः जातः ।

लोहियवर्यः १९१० वर्षे मार्चमासे २३ दिनाङ्के संयुक्तसंस्थाने स्थिते अकबरपुरे जन्म प्राप्तवान् । दशमे एव वयसि तस्य राजकीयजीवनम् आरब्धम् । विदेशीयवस्तूनां दहनं, स्वदेशीयवस्तूनाम् उपयोगः, असहकारप्रदर्शनम् इत्यादिषु तेन भागः गृहीतः । सः गान्धिवर्यस्य सत्याग्रहमार्गम् अपि अनुसृतवान् । किन्तु कदापि अन्धानुयायी न आसीत् सः ।

बनारस्हिन्दुविश्वविद्यालये तेन अध्ययनं कृतम् । तत्र तस्य प्रतिभा प्रकाशिता जाता । १९२९ तमे वर्षे सः अखिल-भारत-विद्यार्थिकाङ्ग्रेस्संस्थायाः अध्यक्षः जातः ।

१९३४ तमे वर्षे सः भारतीयराष्ट्रियकाङ्ग्रेस्संस्थां प्रविष्टवान् । यदा केचन तरुणकाङ्ग्रेस्सदस्याः सम्भूय काङ्ग्रेस्समाजवादिपक्षं प्रतिष्ठापितवन्तः तदा लोहियवर्यः 'काङ्ग्रेस्सोषियलिस्ट्'पत्रिकायाः सम्पादकः जातः ।

१९४२ तमे वर्षे 'भारतं त्यज्यताम्'-आन्दोलनं यदा तीव्रं जातं तदा लोहियवर्यः भूगतमुद्रणालये करपत्राणि भित्तिपत्राणि च मुद्रापयति स्म । सः मुम्बयीनगरे 'काङ्ग्रेस् रेडियो'नामकं रहस्य-आकाशवाणीकेन्द्रम् अपि आरब्धवान् । स्वातन्त्र्यसङ्ग्रामे भागग्रहणाय तेन जनाः प्रेरिताः । अतः आंग्लसर्वकारः तं कारागारे स्थापयित्वा चित्रहिंसया अपीडयत् । तथापि सः धैर्यच्युतः तु न जातः ।

लोहियवर्येण अन्ताराष्ट्रियराजनैतिकक्षेत्रे अपि प्रभावः स्थापितः । १९५२ तमे वर्षे प्रथमस्य एशिया-समाजवादिसम्मेलनस्य आयोजने साहाय्यम् अकरोत् । १९५३ तमे वर्षे तेन अन्यैः समानमनस्कैः सह सम्भूय प्रजासमाजवादिपक्षः संस्थापितः । सः भारतीय-भाषाणां विकासार्थं, वर्गजातिभेदरहितस्य समाजस्य निर्माणार्थं च अविरतप्रयत्नं कृतवान् ।

सः उत्तरप्रदेशीयं फरुकाबाद-लोकसभास्थानं १९६३ तमे वर्षे जितवान् । सः लोकसभायां स्वस्य विचारं निर्भयतया प्रखरतया च प्रतिपादयति स्म । सः श्रेष्ठेषु उत्तमसंसत्सदस्येषु अन्यतमत्वेन परिगण्यते ।

लोहियवर्यः कुल्यानिर्माणं, जलबन्धरचनम् इत्यादिषु अनेकेषु निर्माणात्मककार्येषु भागम् अवहत् । १९६७ तमे वर्षे अक्टोबर्मासस्य १२ दिनाङ्के सः दिवङ्गतः । 'अहं लोहियसदृशं सरलं मेधाविनं जनम् इतःपूर्वं न दृष्टवान् । सः बलप्रदर्शनं न प्रोत्साहितवान् । तदीयानि कृत्यानि शुचीनि आदरवर्धकानि च भवन्ति स्म' इति गान्धिवर्यः तस्य प्रशंसां कृतवान् आसीत्, यदा लोहियवर्यः १९४० तमे वर्षे 'हरिजन'पत्रिकायां सर्वकारीयनीतिविरुद्धस्य लेखनस्य निमित्तं कारागारे स्थापितः तदा ।



# यक्षपर्वतः

पूर्वं नर्मदानदीसमीपे स्थिते अरण्ये केचन वनवासिनः निवसन्ति स्म । एतेषु गण्डकजातीयाः अपि अन्यतमाः । ते अरण्ये यस्मिन् प्रदेशे निवसन्ति स्म तस्य प्रदेशस्य नाम अरण्यपुरम् इति । ते गण्डकमृगान् पालयन्ति स्म । तेषां साहाय्येन कृषिं कुर्वन्ति स्म च । तान् आरुह्य प्रयाणम् अपि कुर्वन्ति स्म ते । अतः एव ते गण्डकजातीयाः इत्येव निर्दिश्यन्ते स्म ।

एतज्जातीयानां नायकस्य नाम आसीत् - अरण्यमल्लः इति । एतज्जातीयः गणाचार्यः नाम कश्चन तम् अधिकारात् च्यावयितुं प्रयत्नं कुर्वन् आसीत् । उभयोः क्षत्रिययुवकयोः द्वारा अरण्यमल्लः तेषां कुतन्त्रम् अवगतवान् । अतः तं मारितवान् सः । तस्य शवः व्याघ्रेभ्यः आहाररूपेण अर्पितः ।

अरण्यमल्लस्य सिंहासनारोहणस्य अनन्तरम् एकं वर्षम् अतीतम् । अतः गण्डकजातीयाः वार्षिकोत्सवम् आचरितवन्तः । राजानं सुसज्जे सिंहासने उपवेश्य जनाः उत्सवम् आचरितवन्तः । जनानाम् आदरं प्राप्य राजा नितरां सन्तुष्टः ।

अत्रान्तरे गण्डकजातीयौ उभौ युवकौ मृगम् आरुह्य वेगेन तत्र आगतौ । तौ साक्षात् अरण्यमल्लस्य समीपम् एव प्रस्थितवन्तौ ।

तदा तत्रैव स्थितः शिलामुखः नाम मन्त्री तयोः गमनं निवार्य अवदत् - ''मन्त्री अहम् अत्र अस्मि इति किं भवद्भ्यां विस्मृतम् ? मम अनुज्ञां विना राज्ञः मेलनं कथं शक्येत ? धिक् भवन्तौ'' इति ।

तदा तयोः अन्यतरः अवदत् - ''मन्त्रिवर्य ! पर्वतस्य उपत्यकासमीपे स्थितम्



अस्माकं क्षेत्रं केचन नूतनाः जनाः आगत्य धान्यानि कर्तयित्वा नयन्तः सन्ति । तैः ये पशवः आरूढाः ते तु अद्यावधि अस्माभिः न दृष्टाः'' इति ।

एतत् श्रुत्वा शिलामुखः अपृच्छत् - ''ते पशवः कीदृशाः सन्ति ? तेषां स्वरूपं किम् ?'' इति ।

''ते गजाः इव उन्नताः । तेषां पादाः व्याघ्राणाम् इव । बकानाम् इव तेषां कण्ठः दीर्घः, किन्तु, सः स्थूलः वक्रः चापि'' इति विवृतवन्तौ तौ युवकौ ।

शिलामुखः तौ युवकौ राजसमीपं नीतवान् । ताभ्याम् उक्तस्य पशोः विवरणम् उक्तवान् च ।

''अस्मदीयाः महता श्रमेण सस्यानि वर्धितवन्तः आसन् । तानि अपहर्तुम् उद्यतानां तेषाम् आक्रामकाणां कियत् धैर्यं स्यात् ? भवद्भिः किमर्थं वा प्रत्याक्रमणं न कृतम् ? अत्र आगत्य तेषां वाहनभूतानां पशूनां विषये आश्चर्यप्रकटनेन किं प्रयोजनम् ?'' इति कोपेन उक्तवान् अरण्यमल्लः ।

एतदनन्तरं मन्त्री तत्र सम्मिलितान् उद्दिश्य उच्चस्वरेण अवदत् - ''शृण्वन्तु भो भोः, शृण्वन्तु । उत्सवं स्थगयन्तु । आक्रामकाः अस्माकं सस्यसमृद्धिं लुण्ठयन्तः सन्ति । तान् संहृत्य अस्माभिः अस्मदीया सस्यसम्पत्तिः रक्षणीया अस्ति । एतत् अस्माकम् आद्यं कर्तव्यम्'' इति ।

मन्त्रिणः एतत् वचनं श्रुत्वा गण्डक-जातीयाः ते उत्सवाचरणं स्थगयित्वा शूल-खड्ग-धनुर्बाणादीनि आयुधानि गृहीत्वा जयकारं कुर्वन्तः गण्डकमृगान् आरुह्य ततः प्रस्थितवन्तः । मन्त्री शिलामुखः अपि तैः सह प्रस्थितवान् ।

ते सर्वे कृषिक्षेत्रसमीपं गताः । किन्तु तत्रत्यं दृश्यं तेषु भीतिम् अजनयत् । भीतिकारणतः ते तत्रैव स्थिताः । आक्रामकाः २५-३० जनाः स्युः । ते वेगेन सस्यमञ्जरीः कर्तयित्वा विचित्रजन्तोः पृष्ठस्य उपरि स्थापिते स्यूते पूरयन्तः आसन् ।

गण्डकमृगान् आरुह्य शूलखड्ग-धनुर्बाणादीनि गृहित्वा आगतान् गण्डक-जातीयान् आक्रामकाः अपि दृष्टवन्तः । तेषां मनसि अपि भीतिः उत्पन्ना । एवम् उभय-पक्षीयाः अपि परस्परभीतिं प्राप्तवन्तः ।

आक्रामकेषु अन्यतमः स्वस्य शूलम् उन्नीय शत्रून् दर्शयन् स्वजनान् अवदत् -

''तान् पश्यन्तु । क्रूरम् अपि गण्डकमृगम् स्वाधीनीकृत्य वाहनरूपेण उपयुञ्जानाः ते धैर्येण अत्र आगच्छन्तः सन्ति । एतस्मात् स्पष्टं यत् तेषां साहसशीलता असदृशी इति । तान् कथं वा सम्मुखीकर्तुं शक्नुयाम वयम् ?'' इति ।

आक्रामकाणां नायकः गण्डकजातीयान् परीक्षादृष्ट्या दृष्टवान् । 'ते आक्रमणं करणीयं वा न वा इति चिन्तयन्तः सन्ति । तेषु धैर्यस्य अपर्याप्तता दृश्यते । एतस्याः स्थितेः सदुपयोगः स्वीकरणीयः अस्माभिः' इति विचिन्त्य सः स्वस्य अनुचरान् उक्तवान् - ''भो भो उष्ट्रवीराः, गण्डकजातीयाः अस्मत्तः भीताः दृश्यन्ते । अतः एव आक्रमणे तेषां प्रवृत्तिः न दृश्यते । स्वयं पश्यन्तु भवन्तः । तेषु एकोऽपि अग्रे पदं स्थापयितुं धैर्यं न प्राप्तवान् । एषः एव समुचितः समयः । वयम् एव आदौ आक्रमणं कृत्वा तान् विकीर्णान् करवाम'' इति ।

अग्रे आगच्छतः आक्रामकान् दृष्ट्वा शिलामुखः नितरां भीतः । सः स्वस्य सहचरान् उक्तवान् - ''उन्नतान् जन्तून् आरुह्य आगताः एते अस्मान् लीलया संहरेयुः । अतः सर्वे इतः पलाय्य वृक्षाणां मध्ये निलीय तिष्ठन्तु'' इति ।

नायकस्य आज्ञां श्रुत्वा यावत् गण्डकजातीयाः ततः निर्गन्तुम् उद्युक्ताः तावता आक्रामकाः तान् आक्रान्तवन्तः । शिलामुखः साहसेन तान् निवारयन् - ''जय अरण्यमातः'' इति उच्चैः वदन् अनुचरान् आज्ञापितवान् - ''एतेषां सम्मुखीकरणं सर्वथा असाध्यम् ।



अतः अरण्यपुरं प्रति धावन्तु भवन्तः सर्वे अपि'' इति ।

तदा पार्श्वस्थात् वृक्षसमूहात् कश्चन स्वरः श्रुतः - ''महामन्त्रिन्, शिलामुखवर्य ! अलं भीत्या, पलायनेन वा । आक्रामकाः यं जन्तुम् आरूढवन्तः तस्य नाम उष्ट्रः इति । एतेषां विषये अहं सर्वं जानामि । ते जन्तवः न क्रूराः, भयानकाः वा । अतः भवन्तः गण्डकमृगान् उष्ट्राणां दिशि प्रेरयन्तु । गण्डकमृगाणां शृङ्गाणि सुदृढानि, वज्रायुधवत् कठोराणि च । अतः ते उष्ट्रान् शृङ्गैः व्रणितान् कुर्वन्तु'' इति ।

शिलामुखः झटिति अवगतवान् यत् एषः कण्ठस्वरः क्षत्रियकुलीयस्य स्वर्णाचार्यस्य एव इति । तथापि आक्रामकाणां सम्मुखीकरणार्थं तस्मिन् धैर्यं न उत्पन्नम् । अतः सः युद्धविचारं



परित्यज्य अनुचरैः सह अरण्यपुरं प्रति धावितवान् ।

स्वर्णाचार्यस्य वचनम् आक्रामकनायकेन अपि श्रुतम् आसीत् । अतः सः वृक्षसमूह-समीपं गत्वा उच्चस्वरेण - ''भोः, कः भवान् ? अस्माकं शत्रूणां साहाय्यं किमर्थं क्रियते भवता ? महाबुद्धिमान् इव दृश्यते खलु भवान् ! एषोऽहं भवन्तं दण्डयिष्यामि इदानीम्'' इति उक्त्वा उष्ट्रम् आरुह्य शूलम् उन्नीतवान् ।

तदा स्वर्णाचार्यः कम्पमानः सन् वृक्षात् अवतीर्य - ''आर्य ! मम मारणं पापकरम् । वास्तुविदः मारणं नरकहेतुकम् इति सर्व-शास्त्राणि वदन्ति । अतः अलं साहसेन'' इति अवदत् ।

तदा आक्रामकनायकः हसन् अवदत् - ''वास्तुवित् भवान् ? वास्तुविदा भवता नगरे वासः करणीयः आसीत् खलु ! एतस्मिन् निर्जने अरण्ये शिलानां मध्ये सञ्चारेण को वा लाभः भवतः ?'' इति ।

''श्रीमन् ! गृहनिर्माणकार्यमात्रेण मम परिवारस्य पोषणम् असाध्यं जातम् । अतः सा वृत्तिः मया परित्यक्तव्या अभवत् । यन्त्रनिर्माणरहस्यम् अपि अहं जानामि । विघ्नेश्वरपूजकस्य साहाय्येन मया एकः मायागजः सृष्टः आसीत् । किन्तु उभौ क्षत्रियतरुणौ मम तं प्रयत्नं विफलीकृतवन्तौ । तयोः कारणतः मम वृत्तौ विघ्नः उत्पन्नः । अतः अहं पद्मपुरीं परित्यज्य अरण्यम् आगतः । समीपस्थे कुटीरे एव तौ क्षत्रिय-तरुणौ निवसतः । ततः अनतिदूरे मया विघ्नेश्वरपूजकेन च वास्तुशास्त्रानुगुणम् एकं गृहं निर्मितम् अस्ति । तत्रैव आवयोः वासः'' इति अवदत् स्वर्णाचार्यः ।

''तौ क्षत्रियौ अत्र वसन्तौ किं वा कुरुतः ? तौ तपस्यां तु न कुरुतः खलु ?'' इति उपहासमिश्रितस्वरेण पृष्टवान् आक्रामक-नायकः ।

''तपस्या किमर्थं करणीया ताभ्याम् ? तौ तु क्षत्रियोचितविद्यासु सुनिपुणौ । शिष्टरक्षणम् एव तयोः वृत्तिः'' इति अवदत् स्वर्णाचार्यः ।

एतत् श्रुत्वा आक्रामकनायकः साकूत-स्वरेण स्वर्णाचार्यम् अपृच्छत् - ''गण्डक-जातीयैः वर्धितायाः धान्यसम्पत्तेः स्वायत्ती-करणं किं दुष्टकार्यायते ?'' इति ।

किं वक्तव्यम् इति झटिति न अवगतं

स्वर्णाचार्येण । सः क्षणकालानन्तरम् अवदत् – "हन्त ! भवता अतिकठिनप्रश्नः पृष्टः । विशिष्टार्थगर्भितः अस्ति अयं प्रश्नः । एतस्य किम् उत्तरं वक्तव्यम् इति न ज्ञायते मया" इति ।

"तदास्तां तावत्, तयोः क्षत्रियतरुणयोः वसतिं प्रति मां नयतु" इति आज्ञापितवान् आक्रामकनायकः ।

'एषः तौ मारयितुम् इच्छति' इति झटिति अवगतवान् स्वर्णाचार्यः । तथापि अनन्य-गतिकतया तेन सह तयोः कुटीरं प्रति प्रस्थितवान् सः । स्वर्णाचार्यः चिन्तयति स्म यत् कुटीरप्राप्तितः पूर्वं तौ तरुणौ जागरूकतावचनेन सावधानौ करणीयौ, येन तौ आत्मरक्षणे समर्थौ स्याताम् इति ।

अतः सः तं नायकम् अवदत् – "श्रीमन् ! भवान् अत्रैव तिष्ठतु क्षणकालं यावत् । तौ कुटीरे स्तः वा न वा इति दृष्ट्वा अहम् आगच्छामि" इति ।

तदा नायकः हसन् अवदत् – "भोः, महाबुद्धिमत्ता भवतः । किन्तु एतत् चातुर्यं मम पुरतः अकिञ्चित्करम् । सिन्धप्रान्तस्य मरुभूमितः एतं पर्वतीयप्रदेशं यावत् सुदीर्घं प्रयाणं कृतं मया । एतस्मिन् प्रयाणे भवादृशाः बहवः दृष्टाः । अतः भवतः वचने विश्वासं कर्तुम् अर्हः मूर्खः नास्मि अहम्" इति ।

ततः तौ कुटीरप्रदेशं प्राप्तवन्तौ । वेणु-पट्टिकाभिः निर्मितं द्वारं पिहितम् आसीत् । आक्रामकनायकः तदनुचरः च अन्तः गतवन्तौ । तत्र ताभ्यां व्याघ्रादीनां पशूनां चर्माणि भित्तौ स्थापितानि दृष्टानि । एकस्मिन्



कोणे स्थापिताः धनुर्बाणादयः अपि ताभ्यां दृष्टाः ।

आक्रामकनायकः अनुचरम् आज्ञापित-वान् यत् एतानि सर्वाणि नयतु इति । ततः बहिः आगत्य 'उष्ट्रम् आरोहतु' इति स्वर्णाचार्यम् आदिष्टवान् सः ।

स्वर्णाचार्यः अवगतवान् यत् मम प्राणानाम् अपायः अस्ति इदानीम् इति । आक्रामकनायकः तं बलात् उष्ट्रस्य उपरि आरोपितवान् ।

स्वर्णाचार्यः उच्चैः आक्रोशनम् अकरोत् – "मां रक्षन्तु, मां रक्षन्तु" इति ।

विघ्नेश्वरपूजकः एतत् आक्रोशनं दूरात् श्रुतवान् । स्वर्णाचार्यः महति कष्टे पतितः स्यात् इति ऊहितं तेन । अतः ध्वनिम् अनुसरन् सः क्षत्रियतरुणयोः कुटीरस्य समीपं गतवान् ।

तत्र उष्ट्रस्य उपरि उपविश्य भयेन क्रन्दन्तं स्वर्णाचार्यं, शूलं गृहीत्वा भयं जनयन्तम् आक्रामकनायकं च सः दृष्टवान् ।

'इदानीं किं करणीयम्' इति क्षणकालम् अचिन्तयत् विघ्नेश्वरपूजकः । क्षत्रियतरुणयोः कुटीरे पालितः सिंहः तेन झटिति स्मृतः । सः सिंहः आ बाल्यात् पालितः आसीत् ताभ्यां क्षत्रियतरुणाभ्याम् । तस्य नाम निश्चितम् आसीत् - 'परशुरामः' इति ।

क्षत्रियतरुणयोः विषये यथा तथैव स्वर्णाचार्यविघ्नेश्वरपूजकयोः विषये अपि परशुरामः विशेषतः स्निह्यति स्म । अतः परशुरामात् किञ्चिदपि भीतिः न आसीत् विघ्नेश्वरपूजकस्य, स्वर्णाचार्यस्य वा । यदा तौ क्षत्रियतरुणौ कुटीरे भवतः स्म तदा परशुरामः स्वच्छन्दतया सर्वत्र सञ्चरति स्म । बहिर्गमनसमये तौ तं पञ्जरे बद्ध्वा गच्छतः स्म ।

'यदि एषः सिंहः बन्धनात् मुच्यते तर्हि सः आक्रामकान् मारयेत्, धावयेत् वा । तेन स्वर्णाचार्यस्य रक्षणं भवेत् । स्वर्णाचार्यस्य कोलाहलतः सिंहः क्रुद्धः स्यात् । पञ्जरात् आगतः सः शत्रूणां नाशने एव उद्युक्तः भवेत् । आवां तु सुपरिचितौ इत्यतः आवयोः तु अपायः सर्वथा नास्ति' इति विचिन्त्य सः पञ्जरस्थं सिंहं बन्धनात् मोचितवान् । सिंहः गर्जन् पञ्जरतः बहिः आगच्छत् । उष्ट्रम् उग्रदृष्ट्या अपश्यत् च । ततः गुर्गुरायमाणः सः विघ्नेश्वरपूजकम् अपश्यत् ।

विघ्नेश्वरपूजकः अङ्गुष्ठतर्जनीभ्यां शब्दं कुर्वन् उष्ट्रं प्रदर्श्य आक्रमणार्थं तम् अचोदयत् ।

स्वर्णाचार्यः एतत्सर्वं दृष्टवान् । अतः सः उच्चैः अवदत् - ''परशुराम ! अये परशुराम ! मां रक्षतु'' इति ।

सिंहः स्वर्णाचार्यस्य अभिज्ञानं प्राप्नोत् । सः पृष्ठभागीयपादाभ्यां स्थित्वा केसरान् कम्पयित्वा पुनरपि गर्जनम् अकरोत् । उष्ट्रस्य उपरि आक्रमणम् अकरोत् च । सिंहं दृष्ट्वा नितरां भीतः उष्ट्रः वेगेन पलायनम् आरब्धवान् । ततः कश्चन आक्रामकः उष्ट्रात् अपतत् । सिंहः तत्समीपं गत्वा तं कण्ठे अगृह्णात् ।

- *(अनुवर्तते)*



# आत्मप्रशंसा

एकदा अनन्तः पत्न्या, पुत्र्याः मीनाक्ष्या च सह भोजनार्थं यावत् गन्तुम् उद्युक्तः तावता द्वारे शब्दः श्रुतः - ''बुभुक्षितस्य संन्यासिनः बुभुक्षानिवारणेन पुण्यं सम्पाद्यतां भोः'' इति ।

अनन्तः संन्यासिनां विषये श्रद्धां वहति स्म । अतः सः गत्वा संन्यासिनम् आदरेण स्वागतीकृत्य भोजनार्थं नीतवान् । भोजनसमये संन्यासी उक्तवान् - ''भवान् पूर्वजन्मनि विदर्भदेशस्य अमरसिंहस्य मन्त्री आसीत् । राजा प्रजाः च भवतः बुद्धिमत्तायाः प्रशंसां कुर्वन्ति स्म'' इति ।

एतस्मात् अनन्तः नितरां सन्तुष्टः । ''संन्यासिवर्याय घृतं परिवेषयतु'' इति पुत्रीं मीनाक्षीम् उक्तवान् सः । ततः ''मम पुत्र्याः पूर्वजन्मनः विषये किञ्चित् कथयतु श्रीमन् !'' इति प्रार्थितवान् ।

संन्यासी नेत्रे निमील्य ध्यानम् अभिनीय उक्तवान् - ''अहो, अपूर्वम् ! भवतः पुत्री पूर्वजन्मनि अमरसिंहस्य पट्टमहिषी आसीत्'' इति ।

अनन्तः पुत्रीम् उद्दिश्य - ''संन्यासिवर्याय इतोऽपि किञ्चित् घृतं परिवेषयतु वत्से !'' इति उक्त्वा संन्यासिनम् अपृच्छत् - ''अमरसिंहः इदानीं केन रूपेण जन्म प्राप्तवान् स्यात् ? कुत्र स्यात् सः ?'' इति ।

तदा संन्यासी सर्वान् सकृत् दृष्ट्वा मन्दहासपूर्वकम् अवदत् - ''अहम् एव पूर्वजन्मनि अमरसिंहः आसम्'' इति ।

एतत् श्रुत्वा नितरां कुपितः अनन्तः भित्तिसमीपे स्थितं दण्डं गृहीत्वा संन्यासिनं प्रहर्तुम् उद्युक्तः । भीतः संन्यासी भोजनं परित्यज्य पलायितवान् । वेगेन धावन् सः स्वगतम् उक्तवान् - 'कलियुगे वस्तुस्थितिः उक्ता चेत् प्रहाराः प्राप्यन्ते इति तु सत्यम्' इति ।



# १२. ध्रुवचरित्रम्



सः च शिशिरकालः । प्रातः शीतलः वायुः वाति स्म । देवनाथवर्यः कम्बलेन शरीरम् आच्छाद्य यावत् प्रकोष्ठतः बहिः आगतवान् तावता श्यामलसन्दीपौ नूतनबालकेन सह तत्र उपस्थितौ । सन्दीपः अवदत् - "तात ! आवाभ्यां सह नूतनः श्रोता उपस्थितः अस्ति । 'शिमला'- नगरवासी अयं विरामकालस्य यापनार्थं मातुलस्य गृहम् आगतः अस्ति" इति ।

"भवता नूतनमित्रस्य नाम एव न उक्तम्" - देवनाथवर्यः अवदत् ।

"एतस्य नाम ध्रुवः इति" - सन्दीपः उक्तवान् ।

"उत्तमं नाम । नाम्नः अनुगुणम् उदात्तः व्यवहारः अपि स्यात् तन्नामवतः" इति अवदत् देवनाथवर्यः ।

"कः आशयः एतस्य वचनस्य ?" इति अपृच्छत् सन्दीपः ।

"भवान् ध्रुवस्य कथां किं न जानाति ?" इति प्रतिप्रश्नम् अकरोत् देवनाथवर्यः ।

"ध्रुवस्य नाम तु श्रुतम् । किन्तु तदीया कथा न श्रुता" - सन्दीपः अवदत् ।

"तात ! ध्रुवस्य कथाम् अहं जानामि" - श्यामला उक्तवती ।

देवनाथवर्यः ध्रुवं पश्यन् अवदत् - "किं भवान् तां कथां जानाति ?" इति ।

"सः कश्चन राजकुमारः आसीत् । विमाता तस्य अपमाननं कृतवती । अतः सः अरण्यं गतवान् । तत्र तपस्यां कृत्वा ध्रुवनक्षत्रत्वं प्राप्तवान्" इति उक्तवान् ध्रुवः ।

"भवता सम्यक् एव उक्तम् । एतस्याः कथायाः तात्पर्यं किम् ?" इति अपृच्छत् देवनाथवर्यः ।

क्षणकालं त्रयः अपि परस्परमुखं दृष्टवन्तः । ततः श्यामला अग्रजं पश्यन्ती अवदत् - "भवतः विमाता अस्ति इति चिन्तयतु । सा यदि अवमाननं कुर्यात् तर्हि भवान् अरण्यं गत्वा तपः कुर्यात् ।

# गौरव-गाथा



भवान् अपि नक्षत्रत्वं प्राप्नुयात् । किन्तु आकाशे प्रकाशमानं नक्षत्रं न भवेत्, अपि तु मुम्बयीनगरे चलनचित्रस्य नक्षत्रं स्यात्'' इति ।

एतत् श्रुत्वा सर्वे हसितवन्तः ।

''तात ! हासः उत्तमम् औषधम् इति भवान् वदति खलु ? मया तदेव औषधं भवते दत्तम् । तदर्थं भवता शुल्कं दातव्यं खलु ? शुल्करूपेण भवता ध्रुवस्य कथा श्रावणीया'' इति उक्तवती श्यामला ।

''सा कथा सर्वैः ज्ञायते । मया अपि ज्ञायते इति भवत्या अपि उक्तम् एव'' इति उक्तवान् देवनाथवर्यः ।

''कथा तु प्रायः ज्ञायते । किन्तु कथायाः आन्तर्यं किम् इति अस्मासु कोऽपि न जानाति'' इति उक्तवती श्यामला ।

''अस्तु तावत्, तां कथां श्रावयिष्यामि'' इति उक्त्वा देवनाथवर्यः आसन्दे उपविश्य कथाम् आरब्धवान् –

उत्तानपादनामकस्य राज्ञः उभे पत्न्यौ – सुनीतिः सुरुचिः चेति । सुनीतिः गुणवती, सुशीला, विनयसम्पन्ना च । सुरुचिः तु अहङ्कारपिण्डरूपा । राजा सुरुचेः वचनं कदापि न तिरस्करोति स्म । सा यत् वदति तत् अङ्गीकरोति स्म ।

एकदा राजा सुरुचिः च वार्तालापे मग्नौ आस्ताम् । तदा पञ्चषवर्षीयौ बालौ ध्रुवः उत्तमः च तत्रैव क्रीडन्तौ आस्ताम् । ध्रुवः सुनीतेः पुत्रः । उत्तमः सुरुचेः पुत्रः । किञ्चित्कालानन्तरम् उत्तमः पितुः अङ्के उपविष्टवान् । एतत् दृष्ट्वा ध्रुवः अपि पितुः समीपं गत्वा अङ्कस्य अपरभागे उपवेष्टुं प्रयत्नं कृतवान् । तदा पार्श्वे एव उपविष्टा सुरुचिः अवदत् – ''रे बाल ! अलं साहसेन । पितुः



अङ्के उपवेष्टुं भवतः नास्ति अधिकारः । यदि भवान् मम गर्भतः जन्म प्राप्तवान् स्यात् तर्हि तम् अधिकारम् अपि प्राप्तवान् स्यात् । मम सपत्न्याः गर्भतः जन्म प्राप्तवतः भवतः नास्ति सः अधिकारः'' इति ।

सुरुचेः वचनानि ध्रुवस्य हृदये कण्टकानि इव लग्नानि । सः रुदन् एव ततः निर्गत्य मातुः समीपं गतवान् । माता वात्सल्येन तम् अङ्के उपवेश्य रोदनकारणं पृष्टवती । ध्रुवः विमातुः दौष्ट्यव्यवहारं विस्तरेण उक्तवान् ।

सुनीतेः नेत्राभ्याम् अश्रुधारा निर्गता । सा पुत्रं सान्त्वयन्ती उक्तवती – ''वत्स ! पितुः अङ्के स्थानप्राप्तिः, पितुः आदरस्य प्राप्तिः च न शाश्वतिकी । भगवतः आदरः प्राप्तव्यः । भगवतः आश्रयः च सम्पादनीयः । सः एव श्रेष्ठम् अत्युत्तमं स्थानम् । ततः कोऽपि भवन्तं च्यावयितुं न अर्हति । तत्र अपमानस्य न काऽपि सम्भावना ।



अतः तत् एकम् एव शाश्वतं सुरक्षितम् अत्युत्तमं स्थानम्'' इति ।

ध्रुवः मातुः वचनं श्रद्धया श्रुतवान् । अश्रूणि मार्जयित्वा सः क्षणकालं मौनेन स्थितवान् । ततः उत्थाय सः मातरम् अवदत् - ''अम्ब ! अहं भगवतः प्रीतिं प्राप्तुम् इच्छामि । तपः कर्तुम् इदानीम् एव अरण्यं गन्तुम् इच्छामि । कृपया आशीर्वादं करोतु'' इति ।

एतत् वयः तपसः कष्टं सोढुं योग्यं न इत्येतं विषयम् अवगमयितुं बहुधा प्रयत्नं कृतवती सुनीतिः । किन्तु ध्रुवस्य निर्णयः अविचलः आसीत् । अन्ते अनन्यगतिकतया सुनीतिः आशीर्वादं कृतवती - ''विजयोऽस्तु भवतः'' इति ।

दृढविश्वासेन ध्रुवः अरण्यं गतवान् । एकाग्रचित्ततया तपः कृतवान् च । वने वसन् सः क्रूरमृगेभ्यः भीतः न जातः । आतपः, शैत्यं, वृष्टिः, विद्युत् वा तस्य तपसः विघ्नं न अकुर्वन् । केनापि कारणेन तस्य तपः न स्थगितम् । अन्ते विष्णुः प्रसन्नः भूत्वा प्रत्यक्षः जातः । सः वरं दत्तवान् यत् समग्रजीवनस्य यापनस्य अनन्तरं भवान् आकाशे शाश्वतरूपेण ध्रुवनक्षत्रत्वं प्राप्य विराजमानः भविष्यति इति ।

अद्यापि वयम् उत्तरस्यां दिशि ध्रुवनक्षत्रं द्रष्टुं शक्नुमः । एवं ध्रुवः स्वतपसः प्रभावेण शाश्वतसृष्टेः अङ्गत्वं प्राप्तवान् । पितुः अङ्कः प्राप्तव्यः इत्येषा तदीया अभिलाषा न सफला, विमाता तस्य मार्गे विघ्नम् उत्पादितवती, तथापि सः अद्य तादृशम् उच्चं स्थानं प्राप्तवान् अस्ति, यच्च अन्यैः कथमपि प्राप्तुं न शक्यम् । प्रपञ्चस्य मार्गदर्शकनक्षत्रं सन् सः अद्यापि आकाशे विराजते'' इति कथां समाप्य देवनाथवर्यः अपृच्छत् - ''वरप्राप्तेः अनन्तरं ध्रुवस्य का गतिः जाताः इति किं भवन्तः जानन्ति ?'' इति ।

''का अन्या गतिः ? स तु नक्षत्रत्वं प्राप्तवान्'' इति उक्तवान् ध्रुवः ।

''तथा न जातम् । विष्णोः आज्ञायाः अनुगुणं सः स्वराज्यं प्रत्यागतवान् । अल्पे एव काले सः राजा अपि जातः । योग्येन क्रमेण तेन राज्यं पालितम् । वृद्धावस्थायाम् उत्तानपादः वानप्रस्थाश्रमं प्राप्तवान् । यक्षाः तस्य पुत्रम् उत्तमं मारितवन्तः आसन् । अतः ध्रुवः एकाकी युद्धं कृत्वा यक्षान् पराजितवान् । अन्ते तेषां राजा कुबेरः सन्धिप्रस्तावं कृतवान् । ध्रुवाय अनेके वराः तेन दत्ताः । एताः सर्वाः घटनाः किं सङ्केतयन्ति इति किं भवद्भिः ज्ञायते ?'' इति पृष्टवान् देवनाथवर्यः ।

बालैः यदा किमपि उत्तरं न दत्तं तदा देवनाथवर्यः एव पुनः अवदत् - ''भगवतः अनुग्रहस्य प्राप्तेः अनन्तरम् अपि, अनेकेषां वराणां प्राप्तेः अनन्तरम् अपि ध्रुवः राज्यपालनरूपं स्वकर्तव्यं

श्रद्धया पालितवान् । अतः एषा घटना ज्ञापयति यत् महत् सुखम् आनुकूल्यं च प्राप्तं चेदपि मानवेन स्वकर्तव्यपालनं न विस्मर्तव्यम् इति । कर्तव्यपालने कदापि उपेक्षा न प्रदर्शनीया । वरादिप्राप्तितः अहङ्कारः दर्पः च वर्धते । तेन मानवः नीचकार्याणि कर्तुम् उद्युक्तः भवति । ततः तस्य पातनं दिने दिने वर्धिष्यते । यः अहङ्कारदर्पादीनां वशः भवति, कर्तव्यपालने अनादरं यः न प्रदर्शयति तस्य एव जीवनं सार्थकम् । सः एव भगवतः साधनत्वं प्राप्नुवन् उत्तमानाम् आदर्शानाम् उपस्थापने समर्थः भवति ।

भगवतः अनुग्रहस्य दिव्यशक्तीनां च प्राप्त्यर्थं प्रयत्नाः एव मानवजीवनस्य लक्ष्यं स्यात् । उत्तानपादः यथा ध्रुवस्य आशायाः भङ्गं कृतवान् तथैव अन्येषाम् आशायाः भञ्जकाः बहवः भवितुम् अर्हन्ति लोके । वस्तुतः अन्यस्य आशायाः भङ्गार्थं प्रयत्नः पाशविकी वृत्तिः । यः भगवति अचलविश्वासं प्रदर्शयति तं भगवान् कदापि न खेदयति । एतादृशान् बहून् अंशान् ज्ञापयति ध्रुवस्य कथा'' इति ।

''तात ! किं ध्रुवः वस्तुतः अपि नक्षत्रत्वं प्राप्तवान् ?'' इति अपृच्छत् सन्दीपः ।

''अहं चिन्तयामि यत् एतत् एकं प्रतीकम् इति । ध्रुवनक्षत्रम् औन्नत्यस्य सुस्थिरतायाः च प्रतीकम् । अल्पविषयैः आकृष्टाः मानवाः ईर्ष्याघृणादीनां तामसिकगुणानां वशाः यदि भवन्ति तर्हि जगतः सर्वनाशः निश्चितः । एतन्निवारणार्थम् उत्तमः मार्गः नाम – दिव्यशक्तौ अस्माकं दृष्टेः अवधानस्य च स्थापनम् । ध्रुवनक्षत्रम् अस्मभ्यम् एतम् एव सन्देशं ददाति'' इति उक्तवान् देवनाथवर्यः ।

''धन्यवादाः तात ! एतस्याः कथायाः आन्तर्यं कथयन् भवान् समुचिते मार्गे गमनार्थम् अस्मभ्यं प्रेरणां दत्तवान्'' इति उक्तवान् ध्रुवः ।

''ध्रुवस्य कथा अतिप्राचीना । भगवद्-भक्तयोः सम्बन्धः एव नित्यः शाश्वतः च । अन्ये सर्वे सम्बन्धाः परिवर्तनशीलाः । एतत् सत्यं प्रकाशयति ध्रुवस्य कथा । भारतीयं तत्त्वशास्त्रं वदति यत् भगवान् सर्वव्यापी इति । अन्यस्य कस्यचित् राजकुमारस्य कथा अपि एतत् एव तत्त्वं प्रतिपादयति । किं भवन्तः तस्य राजकुमारस्य नाम वक्तुम् अर्हन्ति ?'' - देवनाथवर्यः अपृच्छत् ।

''तस्य राजकुमारस्य नाम प्रह्लादः इति खलु ?'' इति पृष्टवान् सन्दीपः ।

''आम् । भगवान् सर्वत्र अस्ति इत्येतत् सत्यं प्रमाणीकृतवान् सः । राक्षसराजः हिरण्यकशिपुः एतत् सत्यं तिरस्कृतवान् । अतः भगवान् तत् सत्यं प्रतिष्ठापयितुं नरसिंहावतारं प्राप्य हिरण्यकशिपुं संहृतवान्'' – देवनाथवर्यः अवदत् ।

- *(अनुवर्तते)*



# विनयः

केशवः अमरपुरस्य धनिकेषु अन्यतमः । कदाचित् तस्मै कस्यचित् उद्यानपालकस्य आवश्यकता आपतिता । स्वमित्रं शिवं सः एतं विषयम् उक्तवान् । शिवः मल्लेश-गल्लेशनामकौ उभौ तरुणौ प्रेषयित्वा 'एतयोः अन्यतरं चिनोतु' इति सूचितवान् ।

केशवः तौ उद्यानं नीत्वा - ''सायङ्कालपर्यन्तम् अत्र कार्यं क्रियताम् । भवतोः कतरः स्वीकरणीयः इति सायं निर्णेष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

मध्याह्नसमयः । महान् आतपः बाधते स्म । तस्मिन् समये केशवः उद्यानं गतवान् । उपस्थितं स्वामिनं दृष्ट्वा गल्लेशः तस्य उपवेशनार्थं झटिति आसन्दम् आनीतवान् । पातुं जलं दत्त्वा तस्य पादमर्दनम् अपि कृतवान् ।

केशवः गल्लेशम् अवदत् - ''घोरे आतपे आगतवतः मम विषये मल्लेशेन किमपि न कृतम् एव । सः अहङ्कारी इति भाति । विनयव्यवहारम् एव न जानाति सः'' इति ।

अनन्तरं सः मल्लेशम् आहूय अपृच्छत् - ''महति आतपे सञ्चरन् अहम् आगतः । आगमनानन्तरं कश्चन कालः अतीतः अपि । तथापि भवता मद्विषये न चिन्तितं, मत्समीपं न आगतम् अपि । स्वामिनि एतादृशी अविधेयता किं शोभते ?'' इति ।

''क्षम्यतां श्रीमन् ! कार्यव्यग्रः अहं भवतः आगमनं न लक्षितवान् एव'' इति वदन् क्षमां याचितवान् मल्लेशः ।

तयोः कृते पुनः किञ्चित् कार्यम् उक्त्वा ततः निर्गतवान् केशवः । अनन्तरदिने सः मल्लेशम् एव उद्योगे नियुक्तवान् । तदा गल्लेशः आश्चर्येण पृष्टवान् - ''श्रीमन् ! ह्यः मया भवतः सेवा कृता । किन्तु भवता मल्लेशः उद्योगे नियुक्तः । 'सः अहङ्कारी, स्वामिनः विषये अवधानवान् न' इति भवता एव ह्यः उक्तम् आसीत् । तथापि भवता सः एव किमर्थं नियुक्तः ?'' इति ।

तदा केशवः उक्तवान् - ''भवान् मां सन्तोषयितुं प्रयत्नं कृतवान् । कार्ये अश्रद्धावन्तः एव एतादृशं व्यवहारं कुर्वन्ति । मल्लेशः तु कार्ये तथा लग्नः आसीत् यत् सः मम आगमनम् अपि न लक्षितवान् । कार्यश्रद्धया सः विनयं दर्शितवान्, भवान् तु कृत्रिमव्यवहारेण । अतः मया सः एव उद्योगे नियुक्तः'' इति ।



# विंशतितमे शतके भारतम्

## ३. प्रातिवेशिकैः सह युद्धं शान्तिः च (१९५१-१९७६)

स्वातन्त्र्यप्राप्त्यनन्तरं रचितं प्रथमं भारतीयमन्त्रिमण्डलं निश्चयम् अकरोत् यत् देशविभागतः, जागतिकयुद्धतः च सम्प्राप्ताम् आर्थिकदुरवस्थां दूरीकृत्य प्रगतिः साधनीया इति । १९४९ तमवर्षस्य जुलैमासे योजनायोगेन प्रथमायाः पञ्चवार्षिकयोजनायाः घोषणा कृता । एतस्याः योजनायाः लक्ष्यम् आसीत् – राष्ट्रियायस्य वर्धनं, जीवनस्तरस्य प्रगतिः, आहारपदार्थानां खनिजादिवस्तूनां च उत्पादने वृद्धिसम्पादनम्, उद्योगावकाशानाम् अभिवर्धनं चेति । एतस्यां योजनायां कृषेः परमप्राधान्यं दत्तम् । योजनायोगस्य मुख्यः आसीत् प्रधानमन्त्री जवहरलालनेहरूवर्यः । उपाध्यक्षः आसीत् प्रा॰ पि. सि. महलनोबिस्वर्यः ।



काश्मीरविवादः समापनीयः इति भारतपाकिस्थानदेशौ निर्णीतवन्तौ । किन्तु परिहारमार्गे विघ्नायन्ते स्म तद्देशीयाः राजपरिवारीयाः । 'नेषनल् कान्फरेन्स्'नामकः पक्षः अभ्यर्थनाम् अकरोत् यत् काश्मीराय पार्थक्येन एव संविधानम् आवश्यकम् इति । अमेरिका-ब्रिटन्देशौ अभिप्रेतवन्तौ यत् संयुक्तराष्ट्रसङ्घस्य (यु. एन्. ओ.) सान्निध्ये भारते काश्मीरस्य अन्तर्भावः भवतु इति । एतत् संयुक्तराष्ट्रसङ्घस्य नीतेः विरुद्धम् इति भारतेन उक्तम् । पाकिस्थानेन आत्मना वशीकृतेभ्यः प्रदेशेभ्यः सैन्यम् आदौ प्रतिस्वीकरणीयम् इति भारतेन सूचितम् । एतदभ्यन्तरे काश्मीरमहाराजः निर्वाचनं घोषितवान् । पञ्चसप्ततिसदस्यात्मिकायाः शासनसभायाः रचनार्थं भारतेन अनुज्ञा दत्ता । 'नेषनल्कान्फरन्स्'पक्षस्य पञ्चसप्ततिसदस्याः अपि अविरोधं निर्वाचिताः अभवन् । १९५१ तमे वर्षे अक्टोबर्मासस्य ३१ दिनाङ्के प्रवृत्ते तस्याः शासनसभायाः प्रथमे मेलने भारते काश्मीरस्य अन्तर्भावः अङ्गीकृतः ।

प्रथमं महानिर्वाचनं भारतदेशं षण्मासान् यावत् कार्यरतम् अकरोत् । एषा प्रक्रिया १९५१ तमवर्षस्य अक्टोबर्मासे आरब्धा । १९५२ तमवर्षस्य फेब्रवरीमासे समाप्तिं गता च । ४८९ लोकसभास्थानानां निमित्तं, ३८२३ विधानसभास्थानानां निमित्तं च द्वाविंशति(२२)राज्येषु एतत् निर्वाचनं प्रवृत्तम् ।

पञ्चसप्तति(७५)पक्षीयाः सप्तदशसहस्राधिकाः (१७,०००) अभ्यर्थिनः एतस्यां भागम् अवहन् । तेषु षट्सहस्राधिकाः (६,०००) अभ्यर्थिनः स्वतन्त्रतया भागम् अवहन् । काङ्ग्रेस्पक्षेण ३६३ स्थानेषु जयः प्राप्तः । अन्यपक्षाणां मैत्रीं सम्पादितवता साम्यवादिपक्षेण ४१ स्थानेषु जयः सम्पादितः । अतः तेन प्रमुखविरोधिपक्षस्थानं प्राप्तम् । जवहरलालनेहरूवर्यः प्रधानमन्त्रित्वेन चितः जातः ।

# भाषाधारेण राज्यरचना

मे-मासस्य षष्ठे दिनाङ्के भारतस्य राष्ट्रपतिरूपेण डा॰ राजेन्द्रप्रसादः, उपराष्ट्रपतिरूपेण डा॰ राधाकृष्णन्-महोदयः च निर्वाचितौ । संसदः अधिवेशनं मे-मासस्य १२ दिनाङ्के अभवत् । श्री जी. वि. माव्लङ्करमहोदयः प्रथमसभाध्यक्षरूपेण चितः । ततःपूर्वं मार्च्मासस्य २७ दिनाङ्के २१६ सदस्ययुतायाः राज्यसभायाः संरचना अभवत् । १८ गणराज्येषु काङ्ग्रेस्पक्षेण मन्त्रिमण्डलस्य रचना कृता ।



*डा॰ राजेन्द्र-प्रसादः*

१९५२ तमे वर्षे नूतनपक्षस्य उदयः अभवत् । मे-मासे पञ्चमडी इत्यत्र प्रवृत्ते समावेशे जयप्रकाशनारायणमहोदयः समाजवादिपक्षस्य नेतृत्वं स्व्यकरोत् । भारतदेशस्य कृते गान्धिविचारधारा एव अतिप्रशस्ता इति तस्य मतम् आसीत् । एतेन किसान-मजदूर-प्रजापक्षस्य उपरि उत्तमः प्रभावः अभवत् । द्वयोः पक्षयोः अन्तरं न्यूनम् अभवत् । सप्टेम्बर्मासे द्वयोः पक्षयोः मेलनेन प्रजासमाजवादिपक्षस्य उदयः अभवत् । मुम्बय्याम् आचार्यः जे. बि. कृपालानीवर्यः पक्षाध्यक्षरूपेण निर्वाचितः । जयप्रकाशनारायणः, आचार्यनरेन्द्रदेवः, राममनोहरलोहियः, अशोकमेहता च संस्थापकसदस्याः अभवन् ।



*जयप्रकाश-नारायणवर्यः*

यदा पोत्ति श्रीरामुलुवर्यः 'तेलगुभाषाभाषिणां कृते स्वतन्त्रराज्यम् अपेक्षितम्' इति अभियाचमानः निरशनव्रतम् आरब्धवान् तदा भाषाधारेण राज्यरचनायाः अभियाचना आरब्धा । डिसेम्बर्मासे श्रीरामुलुवर्यस्य मरणम् अभवत् । अनन्तरं १९५३ तमे वर्षे नवम्बर्प्रथमे दिनाङ्के मद्रास्प्रान्तस्य ११ मण्डलानि पृथक्कृत्य स्वतन्त्रस्य आन्ध्रराज्यस्य स्थापनं कृतम् । कर्नूल् तस्य राज्यस्य राजधानी अभवत् ।

१९५६ तमे वर्षे यदा राज्यानां पुनर्घटनम् अभवत् तदा हैदराबाद्प्रान्तस्य ९ मण्डलानि योजयित्वा नूतन-आन्ध्रप्रदेशस्य निर्माणम् अभवत् । नूतनराज्यस्य राजधानी अभवत् भाग्यनगरम् (हैदराबाद्) ।

१९५३ तमे वर्षे काश्मीरराज्ये परिवर्तनघट्टः दृष्टः । 'न्याषनल् कान्फरेन्स्'- पक्षस्य मे-मासस्य अधिवेशने अष्टसु सप्त नायकाः 'प्रधानमन्त्रिणः' शेक्-अब्दुल्लवर्यस्य राजनैतिकतन्त्रं विरुद्ध्य वाक्प्रहारं कृतवन्तः । 'शेख्-अब्दुलवर्यः पाकिस्थानदेशेन सह रहसि सन्धानं कुर्वन् अस्ति' इति तस्य उपरि आरोपः आसीत् । राज्यपालः (सद्रङ्-रियाझत्) शेख्-अब्दुल्लवर्यस्य उच्चाटनं कृत्वा तत्स्थाने बक्षी-गुलाममोहम्मदं नियुक्तवान् । शेखवर्यः कारागारे स्थापितः ।



*शेख्-अब्दुल्लः*

यदा भारत-चीनादेशाभ्यां सन्धिः अङ्गीकृतः तदा द्वयोः देशयोः सम्बन्धः प्रमुखं घट्टं प्राप्नोत् । द्वयोः देशयोः सीमानिर्देशः, सैनिककार्याचरणस्य निवारणं, आन्तरिकविषयेषु हस्तक्षेपस्य अकरणं, समानता परस्परसौहार्दता च, शान्त्याः अस्तित्वस्य रक्षणम् इत्येते पञ्च विषयाः तस्मिन् सन्धौ निर्दिष्टाः आसन् । एते विषयाः एव कालान्तरे पञ्चशीलतत्त्वानि इति प्रसिद्धानि । भारतप्रतिनिधित्वेन जवहरलालनेहरू, चीनादेशस्य प्रतिनिधित्वेन चौ-एन्-लाय् च सन्धिपत्रे

१९५४ तमे वर्षे जून् २८ दिनाङ्के हस्ताङ्कनं कृतवन्तौ । अक्टोबर्मासे नेहरूवर्यः चीनादेशस्य प्रवासम् अकरोत् ।

१९५४ तमे वर्षे नवम्बर् ४ दिनाङ्के नूतन-राज्यमेकम् अस्तित्वे आगतम् । यतः फ्रान्स्देशीयैः स्वायत्तीकृतानि पाण्डीचेरी, माहे, कारेकल्, यानम् इत्यादयः प्रदेशाः तैः प्रत्यर्पिताः । सर्वेषां प्रदेशानां संयोजनेन निर्मितः पाण्डिचेरी-केन्द्रशासित-प्रदेशः अस्तित्वे आगतः । किन्तु अधिकृतरूपेण एतेषां प्रदेशानां स्वामित्वपरिवर्तनं तदा एव अभवत्, वर्ष-द्वयानन्तरं भारत-फ्रान्स्देशाभ्यां १९५६ तमे वर्षे मे मासे २८ दिनाङ्के सन्धिपत्रे यदा हस्ताङ्कनं कृतम् ।



- १९५१ तमे वर्षे मे-मासे ११ दिनाङ्के राष्ट्रपतिना राजेन्द्रप्रसादवर्येण नूतनतया निर्मितस्य सोमनाथमन्दिरस्य उद्घाटनं कृतम् ।
- १९५१ तमे वर्षे मार्च्मासस्य चतुर्थदिनाङ्के देहल्याम् ऐदम्प्राथम्येन एशियाखण्डीयाः क्रीडाः (एशियन् गेम्स्) आयोजिताः । ११ देशेभ्यः ४९० क्रीडापटवः क्रीडासु भागम् ऊढवन्तः । पदकपट्टिकायां जपानदेशः अग्रगण्यः आसीत् । भारतं द्वितीयस्थाने आसीत् ।
- १९५१ वर्षे प्रवृत्तायाः प्रथमजनगणनायाः आधारेण '७२० भाषाः देशे अस्तित्वे सन्ति' इति प्रमाणितम् अभवत् ।

# प्रपञ्चस्य अन्येषु भागेषु....

- कृतक-उपग्रहस्य उड्डायनने मानवः अन्तरिक्षे पदम् अस्थापयत् । १९५७ तमे वर्षे अक्टोबर्चतुर्थदिनाङ्के रशियादेशेन निर्मितः स्फुट्निक् - १ कृतकोपग्रहः भूमेः वातावरणम् अतिक्रम्य अन्तरिक्षं प्रति अगच्छत् । नवम्बर्तृतीयदिनाङ्के स्पुट्निक् - २ कृतकोपग्रहः लौकानामकं शुनकं स्वेन सह अनयत् । अमेरिकासंयुक्तसंस्थानेन प्रेषिता क्षेपणी वातावरणे स्फोटिता अभवत् । एतस्मात् असाफल्यात् निरुत्साहम् अप्राप्नुवता अमेरिकादेशेन तस्मिन् एव वर्षे डिसेम्बर्मासे 'एक्स्प्लोरर् - १' नामकः उपग्रहः अन्तरिक्षं प्रति प्रेषितः ।

- जनप्रियाणि 'डेनिस् & मेनेस्' कथाचित्राणि ऐदम्प्राथम्येन रशियादेशीय-दिनपत्रिकासु १९५१ तमे वर्षे डिसेम्बर्-मासे प्रकाशितानि ।
- आक्स्फर्ड्विश्वविद्यालयीयः छात्रः रोजर् बेलिस्टर् चतुर्निमेषाभ्यन्तरे (३.५९.४) ऐदम्प्राथम्येन एकमैल्दूरं धावितवान् १९५४ तमे वर्षे मे-मासस्य षष्ठे दिनाङ्के ।
- अमेरिकादेशस्य अनहेम्प्रदेशे १९५५ तमे वर्षे जुलैमासस्य १८ दिनाङ्के डिस्निल्याण्ड् इत्यस्य सार्वजनिकदर्शनम् अनुमतं जातम् ।
- विश्वविक्रमोल्लेखयुक्तस्य गिन्नीस्पुस्तकस्य प्रथमावृत्तिः १९५५ तमे वर्षे अगस्ट्-मासस्य २७ तमे दिनाङ्के लण्डन्नगरे प्रकाशिता अभवत् ।

# समाजवादिसंरचनायाः पुरस्कारः

मद्रासतः अनतिदूरे स्थिते आवडीनगरे १९५५ तमे वर्षे जनवरीमासे प्रवृत्ते काङ्ग्रेस्-पक्षस्य षष्टितमे अधिवेशने घोषितं यत् समाजवादिसंरचना पुरस्करणीया इति । प्रधानमन्त्री जवहरलालनेहरूवर्यः फेब्रवरीमासे आन्ध्रप्रदेशे निर्वाचनप्रवासं कुर्वन् उद्घोषितवान् यत् सर्वकारः देशे सर्वत्र समाजवादं व्यवहारपथम् आनेष्यति इति ।

जगतः द्वितीयमहाशक्तित्वेन ख्यातेन सोवियत्सङ्घेन सह सन्धिं कृत्वा भारतेन उभयदेशीयराजदूतसम्बन्धे प्रगतिः साधिता । तस्य देशस्य निमन्त्रणं पुरस्कुर्वन् प्रधानमन्त्री १९५५ तमे वर्षे जून्मासे तं देशं गतवान् । अयं प्रवासः प्रायः पक्षात्मकः आसीत् । जून्मासस्य २२ तमे दिनाङ्के उभौ अपि देशौ संयुक्तकथनपुरस्सरं सूचितवन्तौ यत् पञ्चतत्त्वानाम् अनुसरणम् अनुमन्यते इति । आर्थिके, सांस्कृतिके, वैज्ञानिकाभिवृद्धिक्षेत्रे च स्थितः सम्बन्धः इतोऽपि उत्तमः करणीयः इति उभाभ्याम् अपि निर्णीतम् । यदा अध्यक्षः बल्गानिन्वर्यः, प्रधानमन्त्री क्रूशेव्वर्यः च नवम्बर्मासे भारतप्रवासं कृतवन्तौ तदा एषः मैत्रीसम्बन्धः गाढतां गतः ।

राज्य-पुनर्व्यवस्थापनसमितिः १९५३ तमे वर्षे रचिता । एषा १९५५ तमे वर्षे सप्टम्बर्मासस्य ३० तमे दिनाङ्के स्वस्य अभिप्रायलेखं दत्तवती । बहुसङ्ख्याकजनाः यया भाषया भाषन्ते तां भाषाम् अवलम्ब्य १६ राज्यानि रचनीयानि इति तया सूचितम् ।

एतदनुगुणं १९५६ तमे वर्षे नवम्बर्मासस्य प्रथमे दिनाङ्के आस्साम्, आन्ध्रप्रदेशः, उत्तरप्रदेशः, मुम्बयी, पञ्जाब्, पश्चिमबङ्गाल, मध्यप्रदेशः, काश्मीरम्, बिहार, ओरिस्सा, राजस्थानम्, मद्रास्, मैसूरु, केरलम् इत्यादीनि राज्यानि, देहली, अन्दमान् निकोबार्, लक्षद्वीपः, त्रिपुरा, मणिपुरम् इत्येते केन्द्रशासितप्रदेशाः च आरचिताः ।

१९५७ तमे वर्षे केरलराज्ये साम्यवादिसर्वकारस्य रचना जाता, यश्च जगति एव प्रथमः । साम्यवादिपक्षः १२६ स्थानेषु ६० स्थानानि विजितवान् आसीत् । तेन प्रोत्साहिताः पञ्च स्वतन्त्राभ्यर्थिनः अपि जयं प्राप्तवन्तः आसन् । काङ्ग्रेस्पक्षेण केवलानि ४३ स्थानानि प्राप्तानि आसन् ।



इ. एम्. एस्. नम्बूदरीपादः

इ. एम्. एस्. नम्बूदरीपादः मुख्यमन्त्री जातः । प्रजाप्रभुत्व-व्यवस्थायाः मूलाधारः ग्रामीण-पञ्चायत-राजव्यवस्था १९५७ तमे वर्षे व्यवहारपथम् आगता । एतां व्यवस्थां व्यवहारपथम् आनीत-वत्सु आद्ये आस्ताम् आन्ध्रप्रदेश-राजस्थाने ।

काश्मीरसमस्या तु तापदायिका एव आसीत् । १९५८ तमे वर्षे षेक् अब्दुल्लः कारागारात् मोचितः । सः 'प्लेबिसिट्फ्रण्ट्'पक्षस्य नायकत्वं वहन् 'भारते काश्मीरस्य अन्तर्भावः मास्तु' इति प्रतिपादितवान् । पूर्वं प्रवृत्तं जनाभिप्रायसङ्ग्रहकार्यं भारते काश्मीरस्य अन्तर्भावं न अङ्गीकरोत् इति सः अवदत् । राजद्रोहं निमित्तीकृत्य षेक्-अब्दुल्लः पुनरपि कारागारे स्थापितः ।

काश्मीरसमस्यायाः परिहारप्राप्तितः पूर्वम् एव पाकिस्थानदेशः भारतभूभागे आक्रमणं कृत्वा

तस्याः समस्यायाः उग्रताम् अवर्धयत् । भारतेन अपरम् अपि आक्रमणं सम्मुखीकरणीयम् अभवत् । भारतचीनादेशयोः यः मधुरसम्बन्धः आसीत् तत्र तिक्तांशता दृष्टा । टिबेटस्य धार्मिक-नायकः दलैलामावर्यः बन्धनात् कारागारप्रवेशात् च आत्मानं रक्षन् भारतं शरणं गतः । एतस्मात् चीनादेशस्य असन्तुष्टिः प्रवृद्धा ।

- जगति अत्युन्नतशिखरत्वेन ख्यातं मौण्ट्-एवरेस्ट्शिखरं न्यूझील्याण्डीयः एड्मण्ड्-हिलेरी, तार्पा तेनसिङ्ग् नोर्वे च १९५३ तमे वर्षे मे-मासस्य २९ तमे दिनाङ्के ऐदम्प्राथम्येन आरुह्य तत्र भारतीयं त्रिवर्ण-ध्वजम् उड्डायितवन्तौ । ताभ्यां भारतस्य, ब्रिटनस्य, नेपालस्य, संयुक्तराष्ट्राणां च ध्वजाः तत्र उड्डायिताः ।
- भारतेन १९५४ तमवर्षस्य जून्मासे भारत-रत्नं, पद्मविभूषणः, पद्मभूषणः, पद्मश्रीः इत्येतासां राष्ट्रियप्रशस्तीनां प्रदानस्य शुभारम्भः कृतः । प्रथमभारतरत्नप्रशस्तयः सि. राजगोपालचारि, डा॰ एस्. राधा-कृष्णन्, सि. वि. रामन् इत्येतेभ्यः प्रदत्ताः ।



- सत्यजितरायवर्यस्य 'पथेर्पाञ्चाली' इत्येतत् चलनचित्रं १९५५ तमे वर्षे न्यूयार्क्नगरे प्रदर्शितं जातम् । भारतीयचलनचित्र-निर्माणक्षेत्रे एतत् नवपदक्रमायते स्म ।

# प्रपञ्चस्य अन्येषु भागेषु....

- अन्तरिक्षं प्रति प्रेषिता गगननौका १९५९ तमे वर्षे मे-मासे स्वसञ्चारं समाप्य भूमिं प्रति सुरक्षिततया यदा प्रत्यागता तदा अमेरिकादेशेन गगनयात्राक्षेत्रे प्रमुखं पदं निक्षिप्तम् अभवत् । तस्यां गगननौकायां द्वौ वानरौ आस्ताम् । ताभ्यां ३६० मैल्-औन्नत्यं प्राप्य १७०० मैल्प्रयाणं कृतम् ।
- सोवियत् गगननौका लुनिक् - २ चन्द्रग्रहे पदं स्थापितवती १९४९ तमे वर्षे सप्टम्बर्-चतुर्थे दिनाङ्के । एषा अन्तरिक्षे ३५ घण्टाः यावत् स्थित्वा चन्द्रमण्डलसम्बद्धानाम् अयस्कान्तीयक्षेत्राणां, विकिरणप्रसरण-क्षेत्राणां च विषये विषयसङ्ग्रहं कृत्वा भूमिं प्रति प्रेषितवती ।

- १९५८ तमे वर्षे न्यूयार्क्नगरे विलियम् हिग्गिन्बाथम्वर्यः वीडियोक्रीडाः अन्विष्टवान् । टेबल्टेनिस्क्रीडा तदा 'पाङ्ग्' शब्देन निर्दिश्यते स्म । ततः चतुर्दशवर्षाणाम् अनन्तरम् एतस्याः वाणिज्यीयोपयोगः आरब्धः ।
- वेट्मिन्सर्-केन्द्रसभाङ्गणे सार्वजनिक-दर्शनाय स्थापिता पादकन्दुकक्षेत्रीया विश्वस्तरीया 'जूल्स् रोमिट् ट्रोफी' नामिका प्रशस्तिः चोरिता कैश्चित् । एतत् सूक्ष्म-परिस्थितिहेतुकं चौर्यं १९६६ तमे वर्षे मार्च्मासस्य २० तमे दिनाङ्के प्रवृत्तम् । ततः सप्ताहानन्तरम् एषा लण्डन्नगरस्य कस्मिंश्चित् उद्याने परित्यक्ता दृष्टा । कश्चन शुनकः एतस्याः स्थितिम् असूचयत् ।

# पोर्चुगीस्जनेभ्यः गोवाविमोचनम्



दलैलामा

१९५९ तमवर्षस्य मार्च्-मासे १७ दिनाङ्के टिबेट्तः निर्गतः दलैलामावर्यः पञ्चदशदिनानाम् अनन्तरं भारतम् आगतवान् । निर्वासितः सः, तस्य अनुचराः च अत्र अभयदानं प्राप्तवन्तः । भारतेन तेषां स्वागतं कृत्वा वासार्थम् उत्तरप्रदेशे आनुकूल्यानि अपि कल्पितानि । मानवीयतायाः दृष्ट्या भारतेन स्वीकृतं निर्णयं चीनादेशः न असहत । भारतदेशः चीना-टिबेट्देशयोः आन्तरिकसमस्यासु हस्तक्षेपं कुर्वन् अस्ति इति चीनादेशेन आरोपः कृतः । सप्टम्बर्मासे चीनादेशेन स्वदेशस्य मानचित्रमेकं प्रकाशितम् । लडाखतः अस्सामपर्यन्तं विद्यमानः १३२,००० चतुरस्र कि. मी. मितः भारतीयभूदेशः तेषां मानचित्रे अन्तर्भवति स्म । भारतेन अस्मिन् विषये विरोधः प्रकटितः । चीनादेशेन सह वार्तालापः करणीयः इत्यपि भारतदेशेन निर्णयः कृतः ।



राजाजी

तन्मध्ये ज्येष्ठकार्यकर्त्रा सी. राजगोपालचार्येण नूतन-पक्षस्य स्थापना कृता । १९५५ तमे वर्षे जून्मासे मद्रास्नगरे अखिलभारतीय-कृषिकाणां सङ्घटनेन एकम् अधिवेशनं कृतम् । तत्र तैः नेहरूविचारधारायाः प्रबलविरोधः कृतः । भूपरिष्कारः, सहकृषिः इत्यादयः तैः न अङ्गीकृताः । तत्रैव स्वतन्त्रपक्षस्य घोषणा कृता, यत्र अधिकाः काङ्ग्रेस्पक्षस्य प्रमुखाः कार्यकर्तारः एव आसन् । अक्टोबर्मासे प्रवृत्ते प्राथमिकस्तरीये अधिवेशने ११ राज्येभ्यः आगताः ७५० प्रतिनिधयः भागम् ऊढवन्तः । भूस्वामिभिः, राजप्रमुखत्वं यत्र आसीत् तादृशैः राजभिः च स्वतन्त्रपक्षस्य समर्थनं कृतम् ।

मुम्बय्यां मराठीयजनैः गुजरातीयजनैः च पृथक् राज्यम् अपेक्ष्य आन्दोलनं कृतम् । १९६० तमे वर्षे मार्च्मासस्य १८ दिनाङ्के मुम्बयीशासनसभायां मुम्बयी-पुनर्घटनस्य विधेयकं पारितम् अभवत् । मे-मासस्य प्रथमदिनाङ्के अधिकृतरूपेण महाराष्ट्रस्य गुजरातराज्यस्य च निर्माणम् अभवत् । महाराष्ट्रस्य राजधानी मुम्बयी अभवत्, गुजरातस्य च कर्णावती (अहमदाबाद्) । भारतचीनदेशयोः भिन्नाभिप्रायः इतोऽपि जाग्रदवस्थायां यदा आसीत् तदा एव चीनादेशस्य प्रधानमन्त्रिणा चौ एन् लै वर्येण १९६० तमे वर्षे एप्रिल्मासे द्वितीयवारं भारते प्रवासः कृतः । चीनादेशेन प्रस्तावितः एकः अपि सन्धिः शासनं कुर्वता काङ्ग्रेस्पक्षेण, विरोधपक्षेण च न अङ्गीकृतः । चीनादेशेन स्वायत्तीकृतानां भागानां प्रत्यर्पणविषयः तत्र न आसीत् । भारतस्य रक्षणसचिवेन वि. के. कृष्णमेनन्वर्येण सह चीनाविदेशव्यवहारसचिवस्य वार्तालापः आयोजितः आसीत् । सार्वत्रिक-विरोधकारणतः तत् न प्रवृत्तम् । 'अक्सैचिन्'-प्रदेशस्य प्रत्यर्पणं चीनादेशेन न अभ्युपगतम् ।

१९६१ वर्षस्य डिसेम्बर्-१८ दिनाङ्कः भारतस्य इतिहासे सुवर्णाक्षरैः लेखितुं योग्यः । यतः तद्दिने भारतीयसैन्येन २४ घण्टाः यावत् कार्याचरणं कृत्वा पोर्चुगीसैः आक्रान्तां गोवा-दिवु-दमन-प्रदेशानां विमोचनं साधितम् । त्रयाणां प्रदेशानां संयोजनेन केन्द्रशासितप्रदेशस्य गोवाराज्यस्य निर्मितिः जाता । एतस्य सैनिककार्याचरणस्य समर्थनं कुर्वन् नेहरू-महोदयः 'विदेशीयैः नियन्त्रितानां समुदायप्रदेशानां निवारणं करणीयम्' इति अवदत् ।

१९६२ तमे वर्षे फेब्रवरीमासे देशे तृतीय-

सार्वत्रिकनिर्वाचनानि अभवन् । पुनश्च काङ्ग्रेस्-सर्वकारेण अधिकारः रक्षितः । इतरराज्येषु अपि काङ्ग्रेस्सर्वकारेण एव बहुमतं प्राप्तम् । लोकसभायां तेन पक्षेण ३६१ स्थानानि प्राप्तानि । २१ सदस्ययुतः पक्षः प्रमुखविरोधपक्षः अभवत् । साम्यवादिराज्यशासनसभासु १९४२ स्थानेषु काङ्ग्रेस्पक्षेण १७५९ स्थानानि जितानि । साम्यवादिपक्षेण १५३ स्थाननि, स्वतन्त्रपक्षेण १६६ स्थानानि च जितानि । जनसङ्घेन ११६ स्थानानि जितानि । एप्रिल्मासस्य १०दिनाङ्के पुनश्च जवहरलालनेहरूवर्यः प्रधानमन्त्रिरूपेण अधिकारग्रहणं कृतवान् ।

- भारतस्य प्रथमस्य अणुसंशोधनप्रकल्पस्य 'अप्सरा' इत्याख्यस्य उद्घाटनं १९५७ तमे वर्षे जनवरीमासस्य २० तमे दिनाङ्के अभवत् ।



- १९५७ तमे वर्षे एप्रिल्-प्रथमदिनाङ्के भारतेन दशमानपद्धतिः स्वीकृता । तत्र आर्थिकव्यवहारस्य लघुतमं विनिमयद्रव्यम् आसीत् 'एकपैसा' ।
- जवहरलालवर्यस्य जन्मदिनाङ्कः नवम्बर् १४ दिनाङ्कः समग्रभारते बालदिनरूपेण आचरणीयः इति निर्णीतम् ।
- १९५७ तमे वर्षे तारा चेरियन्नामिका मद्रास्-राज्यस्य महापौरत्वं प्राप्य 'प्रथमा महापौरा' इति ख्यातिं प्राप्तवती ।

# प्रपञ्चस्य अन्येषु भागेषु....

- प्रपञ्चस्य प्रथमप्रधानमन्त्रिणी सिरिमावो भण्डारनायिके १९६० तमे वर्षे जून्-मासस्य २१ तमे दिनाङ्के श्रीलङ्कादेशे अधिकारग्रहणं कृतवती ।
- मानवस्य अन्तरिक्षं प्रति गमनस्य स्वप्नः १९६१ तमे वर्षे साकारः अभवत् । रशियादेशस्य 'वोस्टोक् - १' उपग्रहद्वारा गगनयात्री यूरी गगारिन् १९० कि. मी. दूरम् अन्तरिक्षे विहरन् १ घण्टा, ४८ निमेषान् यावत् तत्रैव आसीत् । एप्रिल् १२ दिनाङ्के सः भूमिं प्रत्यागतवान् । मासाभ्यन्तरे मे-मासस्य पञ्चमे दिनाङ्के अमेरिकासंयुक्तसंस्थानेन अलन् शेफर्ड्नामकः गगनयात्री बाह्याकाशं प्रति प्रेषितः । तस्य बाह्याकाशनौका 'फ्रीडम् - ७' इति । जुलैमासे गगनयात्री वर्जिन्ग्रहाम्नामकः बाह्याकाशं गतवान् । अगस्ट्मासे गगनयात्री हमिन् टिटोव् नामकः २४ घण्टाः यावत् बाह्याकाशे एव आसीत् ।

- वैद्यकीयशास्त्रस्य इतिहासे एव महत्तरघट्टः १९६७ तमे वर्षे डिसेम्बर्-तृतीयदिनाङ्के अभवत् । दक्षिण-आफ्रिकादेशस्य क्रिश्चियन् बर्नार्ड् वैद्यः केप् टौन् वैद्यालये नूतनहृदययोजनस्य शस्त्रचिकित्सां यशस्वितया निरूढवान् । ३० वैद्याः अनुवैद्याः च तस्य साहाय्यं कृतवन्तः । हृदयदात्री महिला कस्मिंश्चित् अपघाते दिवङ्गता आसीत् । किन्तु तस्याः हृदयं सुरक्षितम् आसीत् । हृदयस्वीकर्ता १८ दिनानि यावत् जीवितवान् । न्युमोनियारोगेण तस्य मरणम् अभवत् ।

# नेहरूयुगं समाप्तिम् अगात्...

१९६२ तमे वर्षे चीना-भारतयोः युद्धं प्रवृत्तम् । १९५९ तमे वर्षे टिबेट्देशं वशीकृतवता चीनादेशेन भारतसीमापर्यन्तम् आगतं, भारतस्य अतिक्रमणम् आरब्धं च । १९६२ तमवर्षस्य मे-जून्मासयोः तेन जम्मूकाश्मीरराज्यस्य लडाक्-प्रदेशः वशीकृतः । पाकिस्थानदेशेन तस्मिन् एव वर्षे गिल्गिट्प्रदेशम् उपायनरूपेण दत्त्वा चीना-देशस्य मैत्री सम्पादिता । भारतेन एतस्य विरोधः प्रकाशितः । तदा चीनादेशेन उक्तं यत् सीमाविषये भारतचीनयोः मध्ये कोऽपि सन्धिः एव न जातः इति । १९५६ तमे वर्षे चीनादेशस्य प्रधानमन्त्री चौ-एन्-लायः भारते काश्मीरस्य अन्तर्भावविषये विवादास्पदम् अभिप्रायं प्रकाशितवान् ।

अक्टोबर्मासे २० दिनाङ्के चीनासेना दक्षिण-पूर्वीयभागेषु प्रवेशम् अकरोत् । त्रिंशत्सहस्राधिकाः (३०,०००) सैनिकाः अकसाय्चिन्प्रदेशम् अतिक्रम्य असमप्रदेशं प्रति प्रस्थितवन्तः । भारतेन एतत् न ज्ञातम् एव । शैत्याधिक्यस्य कारणतः भारतसेनया एतत् अतिक्रमणं निरोद्धुं न शक्तम् । भारतेन आपत्परिस्थितिः घोषिता । शासनसभायै त्यागपत्रं समर्पितवतः वि. कृ. कृष्णमेननतः जवहरलालवर्यः रक्षाविभागदायित्वं स्वीकृतवान् । अमेरिका, ब्रिटन्, केनडा, पश्चिमजर्मनी, आस्ट्रेलिया इत्यादयः देशाः शस्त्रास्त्रसाहाय्यं प्रतिज्ञातवन्तः । एतत्कारणतः अतिक्रमणस्य अनुवर्तनं स्थगयितुं शक्तः अभवत् भारतदेशः । नवम्बर्मासस्य २१ तमे दिनाङ्के चीनादेशः एकपक्षीयतया युद्धस्थगनम् उदघोषयत् । श्रीलङ्का, बर्मा, काम्बोडिया, इण्डोनेशिया, घाना, संयुक्तारबदेशाः इत्यादयः अलिप्तदेशाः कोलम्बो-नगरे सम्मिलिताः । तैः सूचितः युद्धस्थगनप्रस्तावः भारतेन अनुमतः । किन्तु चीनादेशेन तिरस्कृतः । युद्धसमाप्तेः अनन्तरम् अपि लडाकप्रदेशीयः ३६००० चतुरस्रकिलोमीटर्मितः भूप्रदेशः, नेफाप्रदेशीयः ५१८० चतुरस्र-किलोमीटर्मितः भूप्रदेशः च चीनाधीनः एव अतिष्ठत् ।

तमिळुनाडुराज्यीयः काङ्ग्रेस्नायकः के. कामराजवर्यः स्वविचारान् उपस्थापितवान् यत् दशाधिकवर्षाणि ये अधिकारस्थाने स्थितवन्तः स्युः ते तत् पदं परित्यज्य पक्षशक्तिवर्धनकार्ये उद्युक्ताः भवेयुः इति । १९६३ तमे वर्षे अगस्ट्मासस्य दशमे दिनाङ्के एषा 'कामराजयोजना' कार्यपथम् आगता । कामराज-वर्यः स्वस्य त्यागपत्रसमर्पणेन एतद्विषये प्राथम्यं दर्शितवान् । मुरार्जी देसायी, जगजीवनरामः इत्यादयः अन्ये षट् सचिवाः अपि एतम् एव मार्गम् अनुसृतवन्तः । पञ्चानां राज्यानां मुख्यमन्त्रिणः अपि एवम् एव कृतवन्तः ।



के. कामराजः

भारतीये राजनैतिकक्षेत्रे वज्ररेखायमानं नेहरूयुगं १९६४ तमवर्षस्य मे-मासस्य २७ तमे दिनाङ्के समाप्तिम् अगात् । भुवनेश्वरीये काङ्ग्रेसाधिवेशने भागं वहन् एव नेहरूवर्यः अस्वस्थः जातः । चिकित्सानन्तरम् अपि तेन पूर्वतनं स्वास्थ्यं न प्रतिप्राप्तम् । तथापि सः स्वस्य कार्येषु उद्युक्तः आसीत् एव । डेहराडूननगरे अल्पं विश्रान्तिसुखम् अनुभूय मे-मासस्य २६ दिनाङ्के प्रत्यागतस्य तस्य देहस्थितिः अनन्तरदिने प्रातः विषमतां गता । अपराह्णे द्विवादने तस्य देहावसानं जातम् । १९५५

तमे वर्षे भारतेन तस्मै 'भारतरत्न'प्रशस्तिः दत्ता । बालेषु विशेषप्रीतिमान् सः 'चाचा'नेहरू इत्येव प्रसिद्धिं गतः आसीत् ।

- कलकत्तीयः मिहिरसेनः १९५८ तमे वर्षे सप्टम्बर्मासस्य २७ तमे दिनाङ्के पादोन-पञ्चदशघण्टाभ्यन्तरे (१४.४५) डोवर्तः फ्रान्स्देशीयं केलसिस्प्रदेशं तरन् गत्वा ३६ कि. मी. दीर्घाम् इंग्लीष्कुल्यां समुत्तीर्य एतादृशं कार्यं कृतवान् प्रथमः भारतीयः एशिया-खण्डीयः च इति ख्यातिं प्राप्तवान् ।
- १९५८ तमे वर्षे अक्टोबर्मासस्य प्रथमे दिनाङ्के भारतेन मेट्रिकीयः भार-परिमाण-तोलनक्रमः व्यवहारपथम् आनीतः ।
- विनोबाभावेवर्यः पिलिप्पैन्स्देशेन दीयमानां म्याग्सेसेप्रशस्तिं १९५८ तमे वर्षे डिसेम्बर्-मासे प्राप्नुवन् 'एतादृशप्रशस्तिं प्राप्तवान् प्रथमः भारतीयः' इति ख्यातिं सम्पादितवान् ।
- १९५९ तमे वर्षे सप्टेम्बर्मासस्य २९ तमे दिनाङ्के आरतीशाहवर्या इंग्लीष्कुल्यां तीर्त्वा 'एतादृशकार्यं कृतवती प्रथमा एशियन्महिला' इति ख्यातिं प्राप्तवती ।
- क्रीडाक्षेत्रे विशिष्टप्रतिभां प्रदर्शितवते अर्जुन-प्रशस्तिप्रदानस्य आरम्भः १९६१ तमे वर्षे जातः ।
- डा॰ एस्. राधाकृष्णवर्यः भारतस्य द्वितीय-प्रधानमन्त्री जातः - १९६२ तमवर्षस्य मे-मासस्य १३ दिनाङ्के । तस्य जन्मदिनं सप्टम्बर्-मासीयः पञ्चमदिनाङ्कः प्रतिवर्षं शिक्षकदिनत्वेन आचरणीयम् इति निर्णीतम् ।
- एशियाखण्डे प्राथम्यं, प्रपञ्चे द्वितीयस्थानं च वैशाल्येन प्राप्तवत् बिर्लातारागोलकं कलकत्तानगरे १९६२ तमे वर्षे सप्टम्बर्-मासस्य २९ तमे दिनाङ्के आरब्धम् ।

# प्रपञ्चस्य अन्येषु भागेषु....

- १९६६ तमे वर्षे फेब्रवरीमासे तृतीये दिनाङ्के 'सोवियत्लूना-९' नामकं यानं चन्द्रे पादार्पणम् अकरोत् । इतः चन्द्रं प्रति मानवस्य प्रयाणम् आरब्धम् । उपग्रहेण चन्द्रमण्डलीयानि बहूनि चित्राणि भूमिं प्रति प्रेषितानि ।

- डग्लस् गिलबर्ट्वर्यः १९६८ तमे वर्षे सङ्गणकयन्त्रे उपयुज्यमानं 'मूषक'नामकं साधनम् अन्विष्टवान् ।
- औषधक्षेत्रं, भौतक्षेत्रं, रसायनक्षेत्रं, साहित्यक्षेत्रं, शान्तिक्षेत्रं च यथा तथैव अर्थशास्त्रक्षेत्रम् अपि नोबेल्-पारितोषिकाय अर्हम् इति परिगणितम् ।
- अपोलो-१४ यानं चन्द्रे अवातरत्, उभौ गगनयात्रिकौ तत्र सञ्चारं कृतवन्तौ चापि ।
- अमेरिकादेशेन १९७३ तमे वर्षे मे-मासस्य १४ दिनाङ्के त्रिभिः गगनयात्रिभिः युक्तं 'स्कैल्याब्'नामकं यानम् आकाशं प्रति प्रेषितम् । ते त्रयः ८४ घण्टाः आकाशे स्थितवन्तः ।
- परमसङ्गणकं सज्जीकृतं १९७६ तमे वर्षे सैमोर्क्रेय्वर्येण । एतत् एक-कलाभ्यन्तरे २,४०,००,००० गणितप्रक्रियाः कर्तुं समर्थम् आसीत् ।
- १९७६ तमे वर्षे जुलैमासे २० तमे दिनाङ्के रशियादेशीयं वैकिङ्ग्-I नामकं यानं मङ्गलग्रहं गत्वा तत्सम्बद्धानि कानिचित् चित्राणि भूमिं प्रति अप्रेषयत् ।

# द्वितीयं पाकिस्थानयुद्धम्

काङ्ग्रेस्शासकाङ्ग्रपक्षेण जून्मासस्य द्वितीये दिनाङ्के लालबहादुरशास्त्री भारतस्य द्वितीय-प्रधानमन्त्रित्वेन चितः । सः जून्मासस्य नवमे दिनाङ्के प्रधान-मन्त्रिस्थानम् अलङ्कृतवान् ।



*लालबहादुरशास्त्री*

भारतीय-साम्यवादिपक्षः १९६४ तमे वर्षे एप्रिल्मासस्य ११ दिनङ्के विभक्तः जातः । १९६२ तमवर्षीयस्य भारतपाक्युद्धस्य अनन्तरं तस्य पक्षस्य नायकेषु अभिप्रायभेदः उत्पन्नः । तेषु केचन चीनादेशसमर्थकाः आसन्, पुनः केचन रशियासमर्थकाः आसन् । अगस्ट्मासे सप्त संसत्सदस्याः लोकसभायां पृथक्गणं रचितवन्तः. इत्यतः भा. सा. पक्षः प्रमुखविरोधिपक्षस्थानात् च्युतः अभवत् ।

१९६४ तमे वर्षे एप्रिल्मासे कारागारात् विमुक्तः काश्मीरनायकः षेक्-अब्दुल्लः प्लेबिसिट्नामकं पक्षम् उज्जीव्य जनानां निर्णयाधिकारं पुनः उच्चारितवान् । १९६४ तमे वर्षे मार्च्-एप्रिल्मासयोः सः तीर्थयात्रारूपेण मेक्कां गतवान् । गमनमार्गे तेन ईजिप्ट्-अध्यक्षः नासरः, चीनानायकः चौ-एन्-लै च दृष्टौ ।

तौ उभौ अपि काश्मीरस्य स्वातन्त्र्येण स्थितिं समर्थितवन्तौ । भारतेन षेक्-अब्दुल्लस्य पारपत्रं निरस्तीकृतम् । एप्रिल्मासे जम्मुकाश्मीरराज्यं भारतीयसंविधानाधीनं जातम् । सदर्-इ-रियाजत्, वजिर्.ए. अजाम् इत्यतौ पारिभाषिकशब्दौ राज्यपालः, मुख्यमन्त्री चेति परिवर्तितौ । तीर्थयात्रातः प्रत्यागतः षेक्-अब्दुल्लः कारागारे स्थापितः ।

१९६५ तमे वर्षे भारत-पाकिस्थानयोः द्वितीययुद्धस्य बीजावापः जातः । भारतसम्बद्धः द्विसहस्र(२०००)चतुरस्रमैल्मितः भूप्रदेशः पाकिस्थानेन चीनाधीनीकृतः । पाकिस्थानसैन्यं गुजरातराज्यस्य कच्छ्प्रदेशं प्राविशत् । जून्मासे पाक्सैनिकाः अनधिकृतरूपेण भारतभूप्रदेशं प्रविश्य सेनाकेन्द्राणाम् उपरि आक्रमणं कृतवन्तः । अगस्ट्मासे भारतेन ज्ञातं यत् सप्तसहस्राधिकाः भयोत्पादकाः काश्मीरे सामान्यजनानां मध्ये सम्मिलिताः सन्ति इति । पाक्सैन्येन गोलकास्त्रप्रयोगः अपि आरब्धः ।

सप्टम्बर्मासस्य प्रथमे दिनाङ्के वायुसेना सीमाप्रदेशेषु उपद्रवं जनयतां विरुद्धं कार्यारम्भम् अकरोत् । तस्मिन् एव मासे चतुर्थे दिनाङ्के पञ्जाबप्रदेशे भारतसैन्येन शत्रुव्यूहं विभेद्य लाहोरं प्रति प्रस्थितम् । षष्ठे दिनाङ्के पाकिस्थानाध्यक्षः अयूबखानः अधिकृततया युद्धम् उद्घोषितवान् । भारतीयसैन्येन शत्रूणां शताधिकानि युद्धवाहनानि नाशयता अनेके विजयाः साधिताः ।

सप्टम्बर्मासस्य एकादशे दिनाङ्के संयुक्त-राष्ट्रसङ्घस्य महाकार्यदर्शी यूथाण्टः युद्धस्थगनार्थं भारतम् आगतः । 'अचिरात् एव युद्धं स्थगनीयम्' इत्येतं तदीयं प्रस्तावम् उभौ अपि देशौ निराकृतवन्तौ । ततः सुरक्षापरिषदः अध्यक्षस्य प्रार्थनानन्तरं त्रयोविंशतितमे दिनाङ्के युद्धं स्थगितम् । पाकिस्थानेन ७१० चतुरस्र-

मैल्मितः प्रदेशः, भारतेन २१० चतुरस्र-मैल्मितः प्रदेशश्च अर्पितः ।

- मयूरः राष्ट्रपक्षित्वेन घोषितः १९६३ तमवर्षस्य जनवरीमासस्य ३१ तमे दिनाङ्के ।
- नागाल्याण्ड्प्रदेशः १९६३ तमे वर्षे



डिसेम्बर्मासस्य प्रथमे दिनाङ्के स्वतन्त्र-राज्यस्थानं प्राप्नोत् ।

- १९६४ तमे वर्षे मार्च्मासस्य २२ तमे दिनाङ्के कलकत्तानगरे प्राचीनकार्यानस्पर्धा



प्रवृत्ता । तस्यां ५०यानानि भागम् अवहन् ।

- १९६४ तमे वर्षे डिसेम्बर्मासे जवहरलालवर्यस्य स्मृत्यर्थं ऐदम्प्राथम्येन स्मरणनाणकम् उट्टङ्कितं भारतसर्वकारेण ।

# प्रपञ्चस्य अन्येषु भागेषु....

- १९६९तमवर्षस्य जुलैमासस्य २१ तमः दिनाङ्कः मानवीयताक्षेत्रे उल्लेखार्हः अस्ति । अमेरिकादेशेन चन्द्रलोके मानवः अवतारितः । नील् आर्म्स्ट्राङ्गः चन्द्रलोके ऐदम्प्राथम्येन पदं स्थापितवान् । ततः अष्टादश-निमेषाणाम् अनन्तरं एड्विन् -आल्ड्रिन् अपि पदनिक्षेपं कृतवान् । तौ उभौ तत्र अमेरिकाध्वजं संस्थापितवन्तौ । तौ तत्रत्यान् शिलाखण्डान्, मृत्तिकाः, विविधचित्राणि च सङ्गृह्णन्तौ तत्र घण्टाद्वयं यापितवन्तौ । तयोः सहचरः मैकेल् कोलिनः 'कोलम्बिया'-नामिकायां मातृनौकायाम् एव आसीत् । ताभ्यां युक्तम् 'ईयान्'नामकं लूनार्यानं मातृनौकां प्रत्यागच्छत् । ततः ते 'अपोलो -११' नामिकया गगननौकया भूमिं प्रत्यागताः । एतद्विषये आर्मस्ट्राङ्गः वदति - ''मानवेन निक्षिप्तम् अल्पं पदम् एतत् । किन्तु अन्तरिक्षक्षेत्रे एतत् एव महा-सिद्ध्यायते'' इति ।
- १९६९ तमवर्षस्य मार्च्मासस्य २५ तमे दिनाङ्के जनरल् याह्याखानः अधिकारसूत्राणि वशीकृत्य पाकिस्थाने सैन्यशासनम् आरब्धवान् । अध्यक्षः अयूबखानः त्यागपत्रं दत्तवान् ।

# भारते प्रधानमन्त्रिण्याः शासनम्

परस्पराक्रमणस्य स्थगनस्य अनन्तरं रशिया-देशस्य माध्यस्थ्येन भारतपाकिस्थानयोः मैत्रीसम्बन्धः आरब्धः । प्रधानमन्त्री लालबहादुर-शास्त्री पाकिस्थानाध्यक्षः अयूबखानः च उजबेकि-स्थानस्य ताष्केण्ट्नगरे १९६६ तमवर्षस्य जनवरी-मासस्य चतुर्थदिनाङ्कात् सप्त दिनानि यावत् वार्तालापं कृतवन्तौ । दशमे दिनाङ्के परस्परमैत्रीं शान्तिं च प्रतिज्ञाय सन्धिपत्रे हस्ताक्षरं कृतवन्तौ । तत्र निर्णीतं यत् उभयोः अपि देशयोः सैन्येन अगस्ट्-पञ्चमे दिनाङ्के या स्थितिः आसीत् सा स्थितिः एव परिपालनीया, युद्धबन्दिनां विनिमयः करणीयः, राजदूतीयसम्बन्धः आरम्भणीयः, उभय-सम्बन्धिविषयेषु उन्नतस्तरीयाधिकारिणां मध्ये चर्चा करणीया, तत्तद्देशस्य आन्तरिकविषयेषु अन्यदेशेन हस्तक्षेपः न करणीयः च इति ।

दौर्भाग्यवशात् तस्मिन् एव दिने मध्यरात्रे शास्त्रि-वर्यः तीव्रं हृदयाघातं प्राप्तवान्, अनन्तरदिने उषसि एव पाञ्चभौतिकदेहं परित्यज्य परं धाम गतः च ।

१९६४ तमे वर्षे नेहरूवर्यस्य दिवङ्गतेः अनन्तरं तात्कालिकतया प्रधानमन्त्रिस्थानम् अलङ्कृतवान् गुल्जारीलालनन्दवर्यः एव एतदवसरे अपि तत् पदम् अलङ्कृतवान् ।

काङ्ग्रेस्पक्षेण अध्यक्षस्य के. कामराजवर्यस्य सूचनानुगुणम् इन्दिरागान्धिवर्या प्रधानमन्त्रित्वेन चिता । सा १९६६ तमवर्षस्य जनवरीमासस्य २३ दिनाङ्के अधिकारसूत्रं गृहीतवती ।

नवेम्बर्मासस्य प्रथमे दिनाङ्के पञ्जाबराज्यं विभक्तम् । चण्डीगढनगरम् उभयसामान्यराजधानीं परिकल्प्य पञ्जाब-हरियाणराज्ये अस्तित्वम् आगते ।

१९६७ तमवर्षस्य फेब्रवरीमासे २७ तमे दिनाङ्के चतुर्थं महानिर्वाचनं प्रवृत्तम् । काङ्ग्रेस्पक्षेण २८ स्थानेषु जयः प्राप्तः । स्वतन्त्रपक्षः ४४ स्थानानि, जनसङ्घः ३५ स्थाननि, भा. स. पक्षः २३ स्थानानि, सि. पि. एं-पक्षः १९ स्थानानि, प्र. सो. पक्षः १३ स्थानानि, अन्यपक्षाः ४५ स्थानानि, स्वतन्त्राभ्यर्थिनः ३५ स्थानानि च प्राप्नुवन् ।



इन्दिरागान्धिवर्या

काङ्ग्रेस्पक्षः पञ्जाब्, राजस्थानं, बिहार, ओरिस्सा, पश्चिम-बङ्गाल, उत्तरप्रदेशः, केरलं, तमिळुनाडु, देहली इत्येतेषु राज्येषु बहुमतात् वञ्चितः जातः । मार्च्मासस्य १२ दिनाङ्के इन्दिरागान्धिवर्या प्रधान-मन्त्रित्वेन पुनरपि चिता जाता ।

काङ्ग्रेस्तः निष्कासिताः, तत्पक्षाय त्यागपत्रं दत्तवन्तः च केचन नायकाः सम्भूय १९६७ तमे वर्षे मे-मासे भारतीयक्रान्तिदलं संस्थापितवन्तः । डा० पि. सि. घोषः, वि. के. कृष्णमेननः, जे. बि. कृपालानी इत्यादयः तस्य नायकाः आसन् । एकाधिकारिता, भ्रष्टाचारः, पक्षपातव्यवहारः इत्यादीनां विरुद्धं युद्धं करणीयं, राजनैतिकमौल्यानि च प्रतिष्ठापनीयानि इत्येतानि तस्य दलस्य मुख्यलक्ष्याणि आसन् ।

डा० झाकिरहुसेनवर्यः १९६७ तमवर्षस्य मे-मासस्य १३ दिनाङ्के भारतस्य तृतीयराष्ट्रपतिः जातः ।

तस्मिन् एव काले पश्चिमवङ्गालीयाः नक्सलैट्-जनाः पूर्णसमर्थं सङ्घटनम् आरब्धवन्तः । दार्जिलिङ्ग्जनपदस्य नक्सलबारीप्रदेशे षष्ट्यधिकग्रामेषु भूविषयकाभ्यर्थनानि आरब्धानि, तदेव अग्रे सशस्त्रयुद्धत्वेन परिणतम् । अचिरात्



डा. झाकिर्-हुसेनः

एव तत् राजनैतिकवर्णम् अपि प्राप्नोत् । नक्सलैट्जनाः स्वकार्यं नगरपर्यन्तम् अपि विस्तारितवन्तः । आन्ध्र-प्रदेशः, केरलं, बिहार, पञ्जाब्, उत्तरप्रदेशः इत्यादिषु राज्येषु अपि तस्य पक्षस्य कार्यं प्रसृतम् ।

- षष्ठः पोप् पौलः १९६४ तमे वर्षे मुम्बयी-नगरम् आगतः । भारतम् आगतः प्रथमः पोप् सः ।
- मलयालंकविः जि. शङ्करकुरुपः १९६५ तमे



जि. शङ्करकुरुप्

वर्षे ज्ञानपीठप्रशस्तिं प्राप्य, तां प्राप्तवत्सु प्रथमः जातः ।

- भारतीयः प्रसिद्धः तरणपटुः मिहिरसेनः १९६६ तमे वर्षे एप्रिल्तः आरभ्य अक्टोबर्-मासान्तं यावत् पञ्चसु महाकुल्यासु तरणं कृत्वा विश्वविक्रमं साधितवान् । ९६ कि. मी. दीर्घ पनामाकुल्यां सपादचतुस्त्रिंशद्घण्टाभ्यन्तरे तरणेन अतिक्रम्य, तत्कार्यं कृतवत्सु सः प्रथमः जातः ।

# प्रपञ्चस्य अन्येषु भागेषु....

- जनरल्याह्याखानः पाकिस्थाने महा-निर्वाचनं घोषितवान् । भूतपूर्वविदेश-व्यवहारमन्त्रिणः झुल्फिकर अलि-भुट्टोवर्यस्य नेतृत्वेन युक्तः पाकिस्थान-जनतापक्षः (पि. पि. पि.) पश्चिम-पाकिस्थाने, शेक् मुजिबुररेहमानस्य नेतृत्वेन युक्तः अवमीलीग्पक्षः पूर्वपाकिस्थाने च जयं प्राप्नोत् । अवामीलीग्पक्षः पूर्व-पाकिस्थानस्य स्वातन्त्र्यम् अभ्यर्थयत् । पूर्वपश्चिमभागयोः अभिप्रायभेदकारणतः तौ विभक्तौ जातौ ।
- सोवियत्देशेन प्रेषिता 'सोयुज् - ९' नामिका गगननौका नव जनान् वहन्ती आकाशे १७ घण्टाः अयापयत् १९७० तमस्य वर्षस्य जून्मासे ।
- 'नासा'संस्थया प्रेषिता 'मरिनार् - ९' नामिका गगननौका १९७१ तमवर्षस्य नवेम्बर्मासस्य १४ दिनाङ्के ऐदम्प्राथम्येन मङ्गलग्रहे पादार्पणं कृतवती । एषा तं ग्रहं ८५% परिशील्य विविधानि छायाचित्राणि भूमिं प्रति अप्रेषयत् । ततः पक्षानन्तरं सोवियत्मार्स् - २ नामिका गगननौका मङ्गलसमीपं गता, किन्तु तत्रत्यायाः धूलेः परिणामतः नष्टा सती दग्धा जाता । ततः डिसेम्बर्मासस्य द्वितीये दिनाङ्के 'मार्स् - ३' नामिका गगननौका यशस्वितया मङ्गलग्रहं प्राप्तवती । ग्रहस्य त्यागात् पूर्वं सा नौका विंशतिकलाः यावत् सङ्केतान् प्रेषितवती भूमिं प्रति ।

# भारतं बाङ्ग्लादेशस्य साहाय्यार्थम्...

काङ्ग्रेस्पक्षस्य अन्तः विद्यमाना असन्तुष्टिः पक्षविभागस्य कारणं जाता । १९६९ तमे वर्षे जुलैमासस्य १६ दिनाङ्के प्रधानमन्त्रिणी इन्दिरागान्धिवर्या अर्थविभागदायित्वम् उपप्रधानमन्त्रितः मुरार्जिदिसायीवर्यतः यदा प्रतिस्वीकृतवती तदा एषा पराकाष्ठां गता ।

१९६९ तमवर्षस्य मे-मासस्य तृतीये दिनाङ्के राष्ट्रपतेः झकीरहुसेनवर्यस्य मरणस्य कारणतः उपराष्ट्रपतिः वि. वि. गिरिवर्यः काङ्ग्रेस्-अभ्यर्थिनं नीलं सञ्जीवरेड्डिवर्यं पराजित्य राष्ट्रपतित्वेन निर्वाचितः जातः । जि. एस्. पाठकः, एम्. शिवषण्मुगंपिळ्ळैवर्यं पराजित्य उपराष्ट्रपतिः जातः ।



*वि. वि. गिरिवर्यः*

राष्ट्रपतिनिर्वाचनावसरे काङ्ग्रेस्पक्षस्थः भिन्नाभिप्रायः इतोऽपि प्रवृद्धः । अतः स च पक्षः द्विधा विभक्तः । इन्दिरागान्धिनेतृत्वयुतः गणः स्वपक्षं काङ्ग्रेस् (आर्) इति अघोषयत् । अपरः गणः स्वपक्षं काङ्ग्रेस् (ओ) इति निरदिशत् । एतस्य प्रमुखः अभवत् काङ्ग्रेसाध्यक्षः एस्. निजलिङ्गप्पवर्यः ।

१९७१ तमे वर्षे मार्च्मासे भारते पञ्चमं महानिर्वाचनं प्रवृत्तम् । ५१८ स्थानेषु निर्वाचनं प्रवृत्तम् । काङ्ग्रेस्(आर्)पक्षेण ३५० स्थानेषु जयः सम्पादितः । मार्च्मासस्य १८ दिनाङ्के इन्दिरागान्धिवर्या पुनरपि प्रधानमन्त्रित्वेन पदम् अलङ्कृतवती ।

देशेन १९७१ तमवर्षस्य डिसेम्बर्मासे अपरं पाकिस्थानयुद्धं सम्मुखीकरणीयम् अभवत् । पूर्व-पश्चिमपाकिस्थानयोः कलहः विषमस्थितिं गतः । पूर्वपाकिस्थाने स्वातन्त्र्यप्राप्त्यर्थं ये प्रयत्नाः प्रवृत्ताः तस्य परिणामतः निराश्रितानां प्रवाहः एव पश्चिमबङ्गालराज्यम् आगतः । ततः प्रत्यक्षतया तस्य राज्यस्य, परोक्षतया देशस्य च आर्थिकस्थितौ विशेषतः क्लेशाः उत्पन्नाः । पाकिस्थानविमानानि पश्चिमबङ्गालमार्गेण आक्रमणम् अकुर्वन् । भारतीयवायुसेना नवेम्बर्मासस्य २३ तमे दिनाङ्के त्रीणि पाक्युद्धविमानानि अनाशयत् । अनन्तरदिने एव भूसेना सूचिता यत् पूर्वपाकिस्थानस्य स्वातन्त्र्यार्थं प्रयत्नं कुर्वत्याः मुक्तिवाहिन्याः साहाय्यार्थं गन्तव्यम् इति । डिसेम्बर्मासस्य तृतीये दिनाङ्के पाक्विमानानि विद्युद्गत्या आक्रमणेन नव भारतीयविमानकेन्द्राणि अनाशयत् । अतः भारतेन पाकिस्थानं विरुध्य युद्धं झटिति घोषितम् । आपत्स्थितिः संसदा अङ्गीकृता ।

डिसेम्बर्षष्ठे दिनाङ्के भारतेन बाङ्ग्लादेशस्य स्वतन्त्रास्तित्वम् अङ्गीकृतम् । डिसेम्बर्-अष्टमे दिनाङ्के बाङ्ग्लादेशस्थं पाकिस्थानसैन्यं सूचितं यत् शरणागतिः अङ्गीकरणीया इति । एतस्मिन् एव काले भारतीयसैन्येन पश्चिमभागे जयः आसादितः । डिसेम्बर्-द्वादशदिनाङ्के पाक्सैन्यं पुनरपि सूचितं यत् शरणागतिः अङ्गीकरणीया इति । ततः दिनत्रयस्य अनन्तरं जनरल् ए. के. नैझी पराजयम् अङ्गीकृतवान् । जनरल् जे. एस्. अरोरवर्यः पाकिस्थानस्य अनिर्बन्धशरणागतिम् अभ्युपगतवान् । एषा शरणागतिः अध्यक्षेण याह्याखानेन अपि अनुमता ।

१९७२ तमवर्षस्य जनवरीमासस्य २० तमे दिनाङ्के अरुणाचलमेघालयप्रदेशौ स्वतन्त्रराज्यत्वं प्राप्तवन्तौ । तदनन्तरदिने एव मणिपुरं, त्रिपुरा, संयुक्तमिझोराम् इत्येतेषां राज्यानाम् उदयः अपि जातः ।

षोडशराज्येषु केन्द्रशसितप्रदेशद्वये च विधान-

सभानिर्वाचनं प्रवृत्तं १९७२ तमे वर्षे मार्च्मासे। चतुर्दशसु राज्येषु देहल्यां च काङ्ग्रेस् (आर्) पक्षेण विजयः साधितः । गोवाराज्ये महाराष्ट्रवादि-गोमान्तकपक्षः अधिकारसूत्रम् अगृह्णात् । मेघालये अखिलपक्षीयपर्वतीयनायकानां सङ्घः बहुमतं प्राप्नोत् । मणिपुरे कस्यापि पक्षस्य पूर्णबहुमतं न आसीत् ।

१९७२ तमे वर्षे जुलैमासस्य तृतीये दिनाङ्के भारतप्रधानमन्त्रिणी इन्दिरागान्धिवर्या, पाकिस्थान-प्रधानमन्त्री भुट्टोवर्यः च सिम्लासन्धिपत्रे हस्ताक्षरं कृतवन्तौ । बङ्गालदेशे पाक्-सैन्यस्य या शरणागतिः जाता सा 'पाकिस्थाने सैन्यशासनं मास्तु' इति वक्तुं भुट्टोवर्यं प्रेरितवती । सः प्रधानमन्त्री जातः । यद्यपि सिम्लासन्धेः मुख्यः विषयः आसीत् बाङ्ग्लादेशस्वातन्त्र्यं, तथापि तत्र चर्चा तु काश्मीर-समस्याम् अधिकृत्य एव प्रवृत्ता ।

भुट्टोवर्यः

१९७३ तमे वर्षे एप्रिल्-मासस्य पञ्चमे दिनाङ्के प्रतिवेशिना सिक्किंदेशेन आन्तरिकपरिस्थितेः निर्वहणार्थं भारतदेशस्य साहाय्यं प्रार्थितम् । अनन्तरदिने भारतसैन्यस्य कश्चन भागः, सि. आर्. पि. गणः कश्चन च सिक्किंदेशं प्राविशत् । प्रजाप्रभुत्वं प्रतिष्ठापनीयम् इत्येषा राजकीयपक्षाणाम् अभ्यर्थना तद्देशीयेन महाराजेन भारतसर्वकारेण च अङ्गीकृता ।

१९७४ तमवर्षस्य सप्टम्बर्मासस्य २४ तमे दिनाङ्के लोकसभा ३५ तमं विधेयकम् अङ्गीकुर्वती सिक्किंराज्यस्य भारताधीनत्वम् अनुमोदितवती । १९७५ तमवर्षस्य एप्रिल्मासस्य २६ तमे दिनाङ्के सिक्किं भारतस्य २२ तमं राज्यं जातम् ।

# भारतीयाः काश्चन प्रमुखघटनाः

- अतिवेगयुतं (प्रतिघण्टं १३० कि. मी. वेगः) राजधानीरैल्यानं १९६९ तमवर्षस्य मार्च्प्रथमे दिनाङ्के देहलीहौरानगरयोः मध्ये सञ्चारस्य आरम्भम् अकरोत् ।
- १९६९ तमे वर्षे डिसेम्बर्मासे भारतस्य चतुर्थी पञ्चवार्षिकयोजना कार्यारम्भम् अकरोत् ।
- दादासाहेबफाल्केवर्यस्य जन्मशताब्दं निमित्तीकृत्य चलनचित्रक्षेत्रेषु विशिष्टसिद्धिं दर्शितवते फाल्केप्रशस्तिदानम् आरब्धम् । तादृशीं प्रशस्तिम् ऐदम्प्राथम्येन देविकाराणीरोरिच्वर्या प्राप्तवती ।
- गिर्-अरण्यं सिंहसन्ततिरक्षणोद्देशेन अभयारण्यत्वेन घोषितं १९६९ तमवर्षस्य डिसेम्बर्मासे ।
- राष्ट्रपतित्वेन वि. वि. गिरिवर्यस्य चयनस्य न्याय्यत्वं सर्वोच्चन्यायालयेन दृढीकृतम् । एवं १९७० तमवर्षस्य एप्रिल्मासस्य २०-२१ दिनाङ्कयोः भारतस्य राष्ट्रपतिः कश्चन ऐदम्प्राथम्येन सर्वोच्चन्यायालयं गतवान् व्यवहाराङ्गतया ।
- कन्याकुमार्यां विवेकानन्दस्मारकं १९७० तमवर्षस्य सप्टम्बर्मासस्य द्वितीये दिनाङ्के राष्ट्रपतिः गिरिवर्यः उद्घाटितवान् ।
- अन्ताराष्ट्रियन्यायालयीयन्यायाधीशः नरेन्द्रसिंहवर्यः १९७० तमे वर्षे अध्यक्षत्वं प्राप्य 'एतत् स्थानं प्राप्तवत्सु भारतीयेषु प्रथमः' इति ख्यातिं सम्पादितवान् ।

# भारतीये राजनैतिकक्षेत्रे विशेषपरिवर्तनानि

भारतेन निर्णीतं यत् अन्तरिक्षकार्यक्रमाणां विशेषप्राधान्यं परिकल्पनीयम् इति । १९७४ तम-वर्षस्य मे-मासस्य १८ दिनाङ्के राजस्थानमरुभूमौ पोखरान्प्रदेशे भूगर्भस्फोटपरीक्षणं कृतम् । एतत् प्रातः सपादाष्टवादने १०७ मीटर्गभीरतायां प्रवृत्तम् । एवं भारतं न्यूक्लियर्क्षेत्रे स्थितं पाश्चात्य-सार्वभौमत्वम् अभञ्जयत् । किन्तु भारतेन प्रतिज्ञातं यत् अणुक्षेत्रीयपरीक्षाः शान्तिनिमित्तम् एव करिष्यन्ते इति ।

फक्रुद्दीन्-अलि-अहमदः भारतस्य पञ्चमः राष्ट्रपतिः जातः अगस्त्मासस्य २४ तमे दिनाङ्के । तस्यैव मासस्य २७ तमे दिनाङ्के बि. डि. जत्तिवर्यः उपराष्ट्रपतिः जातः ।

काश्मीरराज्ये षेक्-अब्दुल्लः १९७५ तमवर्षस्य फेब्रवरीमासस्य २५ तमे दिनाङ्के पुनरपि मुख्यमन्त्री जातः । केन्द्रसर्वकारेण अङ्गीकृतं यत् राज्यसर्वकारः स्वमत्यनुगुणं निर्णयं कर्तुम् अधिकारम् अर्हति, किन्तु अन्तिमाधिकारस्तु भारतसर्वकारस्य एव भविष्यति इति । जुलैमासे षेक् अब्दुल्लः 'प्लेबिसिट्फ्रण्ट्'नामकं पक्षं विसृज्य 'न्याषनल् कान्फरेन्स्'पक्षं प्राविशत् ।

देशे चीनायुद्धं पाकिस्थानयुद्धं च निमित्तीकृत्य १९६२ तमे वर्षे १९६५ तमे वर्षे च आपत्स्थितिः घोषिता आसीत् । तृतीयवारं १९७५ तमे वर्षे आपत्स्थितिः घोषिता । १९७१ तमे वर्षे प्रवृत्ते निर्वाचने इन्दिरागान्धिवर्या यं जयम् आसादितवती सः अन्याय्यः इति अलहाबाद्मुख्यन्यायालयेन जून्मासस्य १२ दिनाङ्के वदता नियमः कृतः यत् इन्दिरावर्या अग्रिमेषु षट्सु वर्षेषु कस्मिंश्चित् अपि निर्वाचितस्थाने स्थातुम् अर्हा न इति । जून्-मासस्य त्रयोदशे दिनाङ्के प्रमुखाः विरोधिपक्षीयाः प्रधानमन्त्रिण्याः स्थानच्युतिम् अभ्यर्थ्य राष्ट्रपतिभवनस्य पुरतः विरोधप्रदर्शनं कृतवन्तः । जून्मासस्य २४ तमे दिनाङ्के सर्वोच्चन्यायालयेन अलहाबाद्न्यायालयनिर्णयस्य स्थगनाज्ञा घोषिता । जुलैमासस्य २५ तमे दिनाङ्के सि. पि. ऐ. पक्षात् ऋते, सर्वे विरोधिपक्षीयाः जयप्रकाशनारायणवर्यस्य नेतृत्वे निर्णीतवन्तः यत् इन्दिरागान्धिसर्वकारस्य विरोधः समग्रे देशे करणीयः इति । तद्दिनस्य रात्रौ फक्रुद्दीन-अलि-अहमदवर्यः आपत्स्थितिम् अघोषयत्, देशस्य सार्वभौमत्वस्य आन्तरिकापायः सम्भाव्यते इति वदन् । जयप्रकाश-नारायणः, मुरार्जिदेसायी, ए. बि. वाजपेयी, एल्. के. अड्वानी, चरणसिंहः, अशोकमेहता इत्यादयः अनेके राजकीयनेतारः कारागारे स्थापिताः । रा. स्व. सङ्घः, अनन्दमार्गः इत्यादीनि अनेकानि सङ्घटनानि निषेधितानि । पत्रिका-पर्यवेक्षणव्यवस्था व्यवहारे आनीता । नवेम्बर्मासस्य सप्तमे दिनाङ्के सर्वोच्चन्यायालयेन रायबरेलीक्षेत्रे इन्दिरागान्धिवर्यायाः निर्वाचनं यत् जातं तस्य न्याय्यत्वं घोषितम् । १९७७ तमे वर्षे अपरस्य महानिर्वाचनस्य आरम्भात् किञ्चित् पूर्वम् आपत्स्थितिघोषणा प्रतिस्वीकृता ।



षेक्-अब्दुल्लः

१९७६ तमे वर्षे सर्वे पक्षाः निर्णीतवन्तः यत् जनतापक्षनामके नूतनपक्षे सर्वे पक्षाः अन्तर्भावं प्राप्नुयुः इति । एवं संसत्सभायां नूतनपक्षस्य उदयः जातः । अन्तर्भावं गताः प्रमुखाः पक्षाः - काङ्ग्रेस् (ओ), जनसङ्घः, भारतीयलोकदलं, समाजवादिपक्षः इत्यादयः । १९७७ तमे वर्षे प्रवृत्ते निर्वाचने जनता-पक्षः शासनाधिकारं काङ्ग्रेस्पक्षतः साधिकारं स्वीकृत्य भारतीयराजनैतिकक्षेत्रे नवाध्यायस्य आरम्भस्य नान्दीम् अगायत् ।

(अग्रिमे मासे – *जगतः महाप्रजाप्रभुत्वोपेतदेशस्य व्यवहाराः*)



# राजमार्गः

चम्पकदेशस्य राजा प्रचण्डसेनः । कदाचित् तस्य मनसि विचारः आगतः यत् मम देशे अभिवृद्धिकार्याणि पर्याप्तमात्रेण न जातानि इति । सः एतस्य कारणानि ज्ञातुं स्वपुत्रं विक्रमसेनं प्रगतिशीलदेशान् प्रति प्रेषितवान् । विक्रमसेनेन सर्वेषु देशेषु सञ्चारं कृत्वा तत्र अनुसृताः उपायाः परिशीलिताः । जनैः तत्र कृतानि प्रगतिसाधककार्याणि दृष्ट्वा विक्रमसेनः आश्चर्यचकितः । 'अस्माकं देशे अपि एवमेव स्यात्' इति सः अचिन्तयत् ।

अत्रान्तरे प्रचण्डसेनराजः आकस्मिकमरणं प्राप्तवान् । अतः विक्रमसेनः झटिति स्वदेशं प्रत्यागतवान् । पञ्चविंशतितमे एव वयसि सः राज्याधिपतिः अभवत् ।

देशस्य प्रगत्यर्थं तस्य मनसि अनेके उपायाः, अनेकाः कार्ययोजनाः च आसन् । किन्तु राज्यकोशे धनं पर्याप्तमात्रेण न आसीत् । अतः सः स्वस्य योजनाः कार्यान्विताः कर्तुं न शक्तः ।

'अस्माकं देशे अनेकाः नद्यः प्रवहन्ति । देशे जलाभावः तु सर्वथा नास्ति । फलसमृद्धिः अपि अस्ति । तथापि देशः किमर्थं प्रगतिपथे नास्ति ?' इत्येव चिन्ता विक्रमसेनस्य । सः चिन्तितवान् – 'जनाः एव एतां समस्यां परिहर्तुं शक्नुवन्ति' इति । समस्यायाः वास्तविकस्वरूपं ज्ञातुं सः कानिचन दिनानि छद्मवेषेण देशे सञ्चारम् आरब्धवान् ।

एकदा विक्रमसेनः वृक्षस्य अधः सुप्तं कञ्चित् युवकं दृष्टवान् । तम् उत्थाप्य – ''किं भोः, निश्चिन्ततया शयनं कुर्वन् अस्ति खलु ? भवतः अन्यत् किमपि कार्यं नास्ति किम् ?'' इति अपृच्छत् ।

तदा सः युवकः – ''कार्यकरणस्य का आवश्यकता ? यदा याचनां करोमि तदा यथेच्छं भोजनं प्राप्तुं शक्नोमि । तादृशाः पुण्यशालिनः भोजनदातारः प्रभूततया सन्ति अस्मिन् ग्रामे'' इति अवदत् ।

युवकस्य एतत् उत्तरं श्रुत्वा विक्रमसेनः

'श्रीमाता'

आश्चर्येण अवदत् – ''तादृशस्य एकस्य नाम वदतु, यः निःशुल्कं भोजनं दद्यात्'' इति ।

सः युवकः ग्रामाधिकारिणः गौरवस्य नाम अवदत् । विक्रमः यदा ग्रामाधिकारिणः गृहं गतः तदा गृहजनाः तम् आदरपूर्वकं सत्कृतवन्तः । भोजनानन्तरं राजा गौरवम् अपृच्छत् – ''समीचीनं भोजनं कृत्वा अहं भवतः व्यवहारे दोषं दर्शयन् अस्मि यत् तदर्थं क्षन्तव्यः । भवान् भोजनदानेन जनानाम् आलस्यं प्रोत्साहयन् नास्ति किम् ?'' इति ।

गौरवः क्षणं यावत् विचिन्त्य – ''स्यान्नाम भवदुक्तं सत्यमेव । किन्तु अहं किं वा कर्तुं शक्नोमि ? सर्वत्र फलसमृद्धिः अस्ति । वर्धितस्य आहारधान्यस्य उपयोगः भवेत् एव खलु ? उपयोगं विना धान्यानां तथैव स्थापनेन किं वा प्रयोजनम् ?'' इति उक्तवान् ।

तदा विवेकः – ''अस्माकं धान्यानि क्रेतुं बहवः देशाः सिद्धाः स्युः एव । तेषु देशेषु धान्यस्य विक्रयणेन भवतः आयस्य अपि वृद्धिः भवेत् खलु'' इति अवदत् ।

तदा ग्रामाधिकारी हसन् – ''अस्माकं देशे उत्तममार्गाः एव न सन्ति । अतः धान्यानि दूरदेशं प्रति प्रेषयितुं न शक्नुमः । एकग्रामतः अन्यग्रामं प्रति गमनमेव दुष्करम् । भवान् वदति यत् जनानाम् आलस्यं वर्ध्यते मया इति । किमर्थं तथा क्रियते इति चिन्तयतु तावत् । यावत् आवश्यकं ततोऽपि अधिकं वर्धयन्तः स्मः खलु । तेषां विक्रयणार्थम् अन्यः मार्गः नास्ति । अतः एव वयं तु चिन्तयामः यत् उत्पादनं न्यूनं भवति चेदेव





वरम् इति'' इति अवदत् ।

तदा विक्रमसेनः अवदत् – ''उत्पादनं न्यूनं भवतु इति चिन्तनं देशहितदृष्ट्या उत्तमं न । योग्यः मार्गः नाम समीपस्थानां राजमार्गाणाम् उपयोगं कृत्वा धान्यानां विक्रयणम् । यदि राजमार्गाः उत्तमाः न सन्ति तर्हि तेषां समीकरणं चिन्तनीयम्'' इति ।

''हे भगवन्, एतत् कर्तुम् अहं सर्वथा न शक्नोमि । ग्रामाधिकारिणः मम परिमितिः अस्ति'' इति अवदत् ग्रामाधिकारी ।

तदा विक्रमः – ''तर्हि सर्वस्य दोषी राजा इति वा भवतः मतम् ?'' इति अपृच्छत् ।

एतत् श्रुत्वा ग्रामाधिकारी अवदत् – ''भवान् विदेशीयः इति भाति । अतः एकम् अंशम् अहं भवन्तं ज्ञापयितुम् इच्छामि । अप्रियस्य कथनार्थं क्षन्तव्यः अहम् । वयम् राज्ञः विषये विशेषादरवन्तः स्मः । राज्ञः विरुद्धं यत्किञ्चिदपि यदि कश्चित् वदेत् तर्हि तस्य प्राणापायः निश्चितः'' इति अवदत् ।

एतत् श्रुत्वा विक्रमः प्रसन्नताम् अनुभवन् – 'देशस्य विषये यत् ज्ञातव्यं तत् अवगतम्' इति चिन्तयन् राजधानीं प्रत्यागतवान् ।

अनन्तरदिने सः मन्त्रिणः आहूय – ''अस्माकं देशस्य दुःस्थितेः कारणं ज्ञातवान् अस्मि । किन्तु एतां परिस्थितिं समीकर्तुं कः उपायः आश्रयणीयः इति अवगन्तुं न शक्नोमि'' इति उक्त्वा स्वस्य देशाटनस्य अनुभवं श्रावितवान् ।

तदा एकः मन्त्री – ''प्रभो, देशस्य स्थितिं दृष्ट्वा भवान् चिन्तां न करोतु । देशे समस्याः सहजाः । तदर्थम् अधिकचिन्तनेन किम् ? एतादृशचिन्तानां विस्मरणार्थम् एव राजवंशीयैः ललितकलाः आश्रीयन्ते । राजधान्यां चन्द्रभानुनामकः कश्चन महाकविः

अस्ति । तेन सह उपविश्य भवान् काव्यवाचनं शृणोतु । ततः भवान् चिन्तामुक्तः भवेत् । मनश्च प्रसन्नं तिष्ठेत्'' इति अवदत् ।

तदा विक्रमसेनः अवदत् - ''यस्य चन्द्रभानोः विषयं भवान् वदन् अस्ति तं तु अहं न जानामि । कविनामश्रवणात् मया कविसम्मानरूपं मदीयं कर्तव्यं स्मृतम् । योग्यः कविः मया अचिरात् एव सम्माननीयः । शिवपुरीस्थं वसुनाथनामकं कञ्चित् कविम् अहं जानामि । मम दृष्ट्या सः श्रेष्ठः कविः । अहं स्वयं गत्वा तस्य सम्माननं कर्तुम् इच्छामि । कवीनां वासस्थानं गत्वा ते सम्मानिताः चेत् राज्ञः गौरवं वर्धते । अतः अहं तथैव करोमि । एतदर्थम् अपेक्षिताः सज्जताः कुर्वन्तु'' इति ।

राज्ञः आज्ञानुसारं सर्वत्र घोषणा कारिता - 'राजा सङ्क्रान्तिदिने शिवपुरीं गत्वा वसुनाथस्य सम्माननं करिष्यति' इति ।

पूर्वनिश्चयानुसारं विक्रमसेनः शिवपुरीं प्रति प्रस्थितवान् । अश्वशकटः सुचारुमार्गे अवरोधं विना शिवपुरीपर्यन्तं गतः । शिवपुरीं प्राप्य राजा वसुनाथम् अवदत् - ''कविवर्य ! वस्तुतः अहं न जानामि यत् भवतः सामर्थ्यं कियत् इति । किन्तु यदा अहं 'शिवपुरीं गत्वा भवतः सम्माननं करिष्यामि' इति निश्चितवान् तदा राजधानीतः शिवपुरीपर्यन्तं राजमार्गस्य व्यवस्था अभवत् । जनाः एतं भारं स्वयं स्वीकृतवन्तः । 'अन्यग्रामेषु अपि एतादृशाः प्रयत्नाः भवेयुः' इति अहम् इच्छामि । तदा देशे सर्वत्र राजमार्गाः भवेयुः । येन उद्देशेन अहं भवतः सम्माननं चिन्तितवान् आसं सः उद्देशः पूर्णः । अतः भवन्तम् अभिनन्दामि'' इति ।

ततः चम्पकदेशस्य विकासः आरब्धः । जनाः अपि ज्ञातवन्तः यत् राजमार्गं जनाः अपि उपयोक्तुं शक्नुवन्ति इति । अतः प्रजाः पूर्ण-परिश्रमेण मार्गनिर्माणे निरताः अभवन् । राजमार्गेण स्ववस्तूनि अन्यत्र नेतुं शक्ताः ते स्वस्य आयं वर्धितवन्तः । ततः आरभ्य देशस्य विशेषाभिवृद्धिः जाता ।



## ६०. चार्वाकवधः

# महाभारतम्

युद्धस्य समाप्तेः अनन्तरं पाण्डवाः गङ्गा-नद्याः तीरम् आगतवन्तः । युद्धे ये बान्धवाः मृताः आसन् तेषां कृते तिलोदकं दत्त्वा दश दानानि च कृत्वा ते मासं यावत् शोकाचरणं कृतवन्तः । धृतराष्ट्रः विदुरेण महिलाभ्यां च सह नगरात् बहिः पर्णकुटीरे वसन् समयं यापितवान् ।

तदनन्तरं युधिष्ठिरं द्रष्टुं व्यासादयः मुनयः, ब्राह्मणाः, गृहस्थाः च समागताः । युधिष्ठिरः तेषां सर्वेषां यथोचितं सत्कारं कृतवान् । तान् उचिते आसने उपवेश्य सः स्वयम् अपि उपविष्टवान् । ततः सः उक्तवान् - ''कृष्ण-भीमार्जुनादयः मां विजयमार्गे आनीतवन्तः । किन्तु 'विजयम्' अहं मनसा अनुभवन् नास्मि । अहं मम गुरूणां वधं कृतवान् । अभिमन्योः द्रौपद्याः पुत्राणां च मरणस्य कारणम् अपि जातः । एवं स्थिते राज्यसुखं कथम् अनुभवेयम् ? न केवलं तावत्, तिलोदकसमये मम मात्रा रहस्यं प्रकटितं यत् महादाता कर्णः मम सहोदरः आसीत् इति । तादृशः महारथः कथं मरणं प्राप्तवान् इति आश्चर्यम् अनुभवन् अस्मि'' इति अवदत् ।

युधिष्ठिरस्य वचनानि श्रुत्वा नारदः कर्णस्य शापवृत्तान्तं श्रावितवान् । यदा कर्णः द्रोण-समीपे धनुर्विद्यायाः अभ्यासं कुर्वन् आसीत् तदा सः अर्जुनस्य प्रावीण्यं दृष्ट्वा तस्मै असूयति





गतवान् । तं साष्टाङ्गं प्रणम्य अवदत् - ''महात्मन् ! अहं भृगुवंशीयः ब्राह्मणः । भवान् मां शिष्यत्वेन स्वीकरोतु'' इति । परशुरामः एतं प्रस्तावम् अङ्गीकृतवान् । परशुरामः कर्णाय अनेकेषाम् अस्त्राणां शस्त्राणां च प्रयोगम् उपसंहारं च बोधितवान् । तत्प्रदेशे स्थितैः यक्षैः गन्धर्वैः च सह स्नेहेन व्यवहरन् स्वस्य अस्त्रविद्यया तान् आश्चर्यचकितान् करोति स्म कर्णः । तेषु दिनेषु एव एकदा सः स्वस्य गुरोः आश्रमस्य समीपे समुद्रतीरे धनुर्बाणादिकं स्वीकृत्य अटन् आसीत् । तदा तेन काचित् धेनुः दृष्टा । सः बाणेन तां मारितवान् । अनन्तरं तेन ज्ञातं यत् सा धेनुः कस्यचित् ब्राह्मणस्य होमधेनुः इति । अनुक्षणं सः तं ब्राह्मणं क्षमां याचितवान् । किन्तु सः ब्राह्मणः शान्तः न अभवत् । सः - ''यदा भवान् रणरङ्गे युद्धं कुर्वन् भवति तदा भवतः रथस्य चक्रं पङ्के मग्नं भविष्यति'' इति शापवचनानि अवदत् ।

अनन्तरं कर्णः निरन्तरसेवया विद्याकौशलेन च परशुरामस्य मनः जितवान् । तस्मात् सर्वाः धनुर्विद्याः अधीत्य ब्रह्मास्त्रस्य उपदेशमपि प्राप्तवान् । किन्तु तेषु दिनेषु एव काचित् घटना प्रवृत्ता ।

एकदा परशुरामः कर्णस्य अङ्के स्वशिरः स्थापयित्वा निद्रितवान् आसीत् । तदा कश्चन कीटः कर्णस्य ऊरौ रन्ध्रकरणम् आरब्धवान् । कर्णः महता कष्टेन तां पीडां सहमानः आसीत् । गुरोः निद्राभङ्गं कर्तुम् अनिच्छन् सः अविचलः उपविष्टवान् । तत्र रक्तस्रावः आरब्धः ।

स्म । तथैव युधिष्ठिरस्य बुद्धिमत्तां, भीमस्य बाहुबलं, नकुलसहदेवयोः सौजन्यं, कृष्णार्जुनयोः स्नेहं च दृष्ट्वा ईर्ष्याम् अनुभवति स्म । अतः एव सः दुर्योधनस्य स्नेहं सम्पादितवान् । द्रोणस्य समीपे विद्याग्रहणसमये एव कदाचित् रहसि द्रोणम् अवदत् - ''गुरुवर्य, भवतां मनसि शिष्याणां विषये पक्षपातः तु नास्ति खलु ! युद्धे अर्जुनः जेतव्यः इति मम तीव्रा इच्छा अस्ति । मां ब्रह्मास्त्रस्य प्रयोगम् उपसंहारं च पाठयतु'' इति ।

द्रोणाचार्यः अर्जुनस्य पक्षपाती आसीत् । अतः सः कर्णम् उद्दिश्य - ''भवान् सूतपुत्रः । ब्रह्मास्त्रं ज्ञातुं ब्राह्मणानां क्षत्रियाणां च एव अधिकारः भवति'' इति अवदत् ।

द्रोणस्य कथनं श्रुत्वा कर्णः महेन्द्रगिरेः समीपे तपः आचरतः परशुरामस्य समीपं



किञ्चित्कालानन्तरं परशुरामः उत्थितवान् । तत्र प्रवहत् रक्तं, कर्णस्य ऊरौ रन्ध्रं कुर्वन्तं कीटं च दृष्ट्वा अवदत् - ''रे, शृणोतु तावत् । ब्राह्मणे एतादृशी सहनशीलता भवितुं न अर्हति एव । भवान् सत्यं वदतु । कः भवान् ?'' इति ।

कर्णः चिन्तितवान् यत् 'सत्यकथनेन परशुरामः शापं दद्यात्' इति । तथापि सः उक्तवान् - ''अहं सूतवंशीयः'' इति । तदा परशुरामः - 'युद्धस्य समये ब्रह्मास्त्रप्रयोगमन्त्रस्य विस्मरणं भवतु' इति शापं दत्तवान् ।

एतावतां शापानां सम्मुखीकरणं कृत्वा अपि कर्णः 'महान् योधः' इति ख्यातः । कलिङ्गदेशस्य राजपुरस्य राज्ञः चित्राङ्गस्य पुत्र्याः स्वयंवरसमये दुर्योधनः तां बलात् अपहृत्य नयन् आसीत् । तदा इतरे राजानः दुर्योधनस्य उपरि आक्रमणं कृतवन्तः । तथापि कर्णः दुर्योधनस्य विजये कारणीभूतः अभवत् ।

एकदा कर्णः अजेयं जरासन्धं पराजित्य मालिनीनाम्नीं नगरीम् उपायनरूपेण प्राप्तवान् । तस्य पराक्रमं दृष्ट्वा आश्चर्यचकितः इन्द्रः अर्जुननिमित्तं कर्णस्य कवचकुण्डले दानरूपेण स्वीकृतवान् । युद्धे कर्णस्य मरणे एते विषयाः कारणीभूताः आसन् ।

नारदद्वारा युधिष्ठिरः कर्णस्य सर्वं वृत्तान्तं श्रुतवान् । तत् सर्वं स्मरन् युधिष्ठिरः - ''मातापितरौ पुत्रस्य निमित्तं कियत् कष्टम् अनुभवन्ति । पुत्राणां सुखार्थम् एव माता नव मासान् यावत् शिशुं गर्भे धृत्वा प्रसवपीडाम् अनुभवति । सुखभोगैः वञ्चिताः अनेके तरुणाः अस्मिन् युद्धे दुर्मरणं प्राप्तवन्तः । धिक् अस्तु क्षत्रियधर्मस्य । राज्यार्थं मया कियन्ति पापानि कृतानि !! न इच्छामि एतत् राज्यम् । अर्जुन ! भवान् एव राज्यशासनं करोतु । अहं तपोजपादिकं कुर्वन् तीर्थयात्रां करिष्यामि'' इति अवदत् ।

युधिष्ठिरस्य वचनानि श्रुत्वा अर्जुनः अपमानितः सन् क्रोधम् अनुभूतवान् । सः युधिष्ठिरम् उद्दिश्य - ''महाराज, स्वस्य राज्यं प्रतिप्राप्तुं भवान् क्षत्रियधर्मस्य पालनं कृतवान् अस्ति । राज्यस्य प्राप्तेः अनन्तरं भिक्षाटनम् असङ्गतम् इति भाति । भिक्षाटनम् एव इष्टं यदि स्यात्, तर्हि एतावतां वधकारणस्य का आवश्यकता आसीत् ? इदानीं भवान् भिक्षाटनस्य इच्छां प्रकटयन् अस्ति खलु ! सर्वे भवन्तं दृष्ट्वा न उपहसेयुः किम् ? नहुषेण

उक्तम् आसीत् यत् मनुष्यः दारिद्र्यस्य कामनां कदापि न कुर्यात् इति । समस्तधर्माणां मूलं धनम् अस्ति । अतः भवता राज्यग्रहणं करणीयम् । अश्वमेधयागं कृत्वा भवान् सर्व-पापैः मुक्तः भवतु'' इति उक्तवान् ।

भीमः अर्जुनं समर्थयन् - ''राजधर्मस्य निन्दायाः किम् औचित्यम् ? शत्रोः वधकरणे दया कुतः ? हिंसा नाम का ? प्रयत्नपूर्वकं दुर्योधनस्य वधं किं भिक्षायाचनार्थं कृतवन्तः वयम् ? पूर्वमेव एतं विषयं यदि अज्ञास्याम तर्हि शस्त्रग्रहणं किमर्थम् अकरिष्याम ? एतावतां हननं किमर्थम् अभविष्यत् ? वयम् अपि यथाशक्ति भिक्षायाचनम् अकरिष्याम । भवान् एतादृशानि वचनानि किमर्थं वदन् अस्ति ? 'कूपखननानन्तरं जलं प्राप्तुं न इच्छति' इति यदि कश्चित् वदेत् तर्हि किं तत् औचित्यम् आवहेत् ? न खलु । वस्तुतः अत्र दोषः न भवतः, अपि तु अस्माकम् एव । भवतः वचनं पुरस्कृत्य बलवन्तः सन्तः अपि वयं निर्बलाः इव व्यवहृतवन्तः । स्मरतु तत्सर्वम् । एतादृशं विचारं परित्यज्य राज्य-शासनं करोतु'' इति अवदत् ।

नकुलसहदेवौ अपि एतेन प्रकारेण एव युधिष्ठिरं प्रति जागरूकतावचनानि अवदताम् ।

अन्ते द्रौपदी अपि - ''भवान् सहोदराणां वचनम् अङ्गीकरोतु । वनवाससमये यदा ते असहनीयं कष्टम् अनुभवन्तः आसन् तदा भवान् तेषां सान्त्वनं कृतवान् आसीत् - 'एतानि कष्टानि सर्वदा न भवन्ति । शीघ्रमेव वयं दुर्योधनं पराजित्य अस्माकं राज्यं प्रति-



प्राप्स्यामः' इति । इदानीं पुनरेकवारं तानि वाक्यानि स्मरतु । भवतः वचनेन हतोत्साहाः भवन्तः सन्ति एते । पूर्वं भवता युद्धं कृत्वा एव राज्यानि जितानि आसन् खलु । राज्य-सम्पादनार्थम् अन्यः मार्गः तु नास्ति खलु ? भवान् एतादृशानि वचनानि यदि वदति तर्हि जनाः भवन्तं मतिभ्रष्टं भावयेयुः । राज्य-शासनम् अपराधाय तु न खलु । अम्बरीशः, मान्धाता इत्यादयः राज्यं परिपालितवन्तः खलु'' इति ज्ञापितवती ।

ततः अनेके ऋषयः युधिष्ठिरं हितवचनानि उक्तवन्तः । महर्षिः व्यासः - ''अस्माकं वधार्थं यदि कोऽपि वेदवेदाङ्गपारगः आगच्छेत् तर्हि सः अपि हन्तव्यः एव अस्माभिः । तेन ब्रह्महत्यायाः दोषिणः न भवामः वयम्'' इति अवदत् ।



सहोदराः, व्यासमहर्षिः, कृष्णः च यदा युधिष्ठिरम् अवगमितवन्तः तदा युधिष्ठिरः सन्देहं चिन्तां च परित्यज्य राज्यभारं निर्वोढुं सिद्धः अभवत् ।

युधिष्ठिरनिमित्तं रथः सज्जीकृतः । तत्र षोडश श्वेताश्वाः योजिताः । श्वेतस्तम्भाः अपि योजिताः । रज्जुं स्वीकृत्य भीमः सारथिस्थाने उपविष्टवान् । अर्जुनः युधिष्ठिरस्य श्वेतच्छत्रं गृहीतवान् । नकुलसहदेवौ चामरं गृहीतवन्तौ । युधिष्ठिरस्य पृष्ठतः युयुत्सोः रथः गच्छति स्म । तयोः पृष्ठतः कृष्णः सात्यकिः च स्वयम् आरुह्य प्रस्थितवन्तौ । तस्याः शोभायात्रायाः पुरतः गान्धारी, धृतराष्ट्रः, कौरवस्त्रियः, कुन्ती, द्रौपदी च पृथक् पृथक् वाहने उपविश्य विदुरेण सह गच्छन्ति स्म । तेषां पृष्ठतः चतुरङ्गसेना गच्छति स्म । एवं युधिष्ठिरः हस्तिनापुरं प्राप्तवान् । नगरं सुन्दररीत्या अलङ्कृतम् आसीत् । सर्वत्र श्वेतपुष्पैः निर्मितानि तोरणानि श्वेतध्वजाः च विराजन्ते स्म । सवैभवं यदा युधिष्ठिरः नगरं प्रविशन् आसीत् तदा सहस्रशः नागरिकाः नार्यः च तत्र समागताः आसन् । मार्गम् उभयतः स्थिताः जनाः हर्षोद्गारं कुर्वन्ति स्म । मन्त्रिणः अन्ये प्रमुखाः च आगत्य – ''राजेन्द्र, अस्माकं भाग्यवशात् एव भवान् शत्रून् पराजित्य धर्मेण पुनः राज्यं प्राप्तवान्'' इति उक्तवन्तः । ब्राह्मणाः आशीर्वादवचनानि उक्तवन्तः ।

युधिष्ठिरः राजगृहं प्रविश्य धौम्यं धृतराष्ट्रं च प्रणम्य देवतानाम् आराधनं कृतवान् । तावता महान् कोलाहलः श्रुतः । दुर्योधनस्य स्नेहितः चार्वाकः युधिष्ठिरस्य समीपम् आगत्य अवदत् – ''ज्ञानिनां वधं कृत्वा भवान् किं साधितवान् ? एतादृशनिकृष्टजीवनेन किं प्रयोजनम् ?'' इति ।

चार्वाकस्य वचनं श्रुत्वा युधिष्ठिरः लज्जितः अभवत् । तत्र उपस्थितान् ब्राह्मणान् उद्दिश्य – ''माम् अनुगृह्णन्तु । अहं तु पूर्वमेव चिन्ताग्रस्तः अस्मि । मां मा निन्दन्तु कृपया'' इति अवदत् ।

तदा ते ब्राह्मणाः – ''राजन्, चार्वाकस्य विचारः अस्माकं विचारः न । एषः दुर्योधनस्य मित्रम् । अतः एवं रटति एषः । भवतः, भवत्सहोदराणां च किमपि अशुभं न भवति । चिन्ता मास्तु'' इति वदन्तः सर्वे मिलित्वा चार्वाकं मारितवन्तः । युधिष्ठिरस्य मानसिक-शान्त्यर्थं कृष्णः युक्तिपूर्वकं चार्वाकस्य पूर्वजन्मवृत्तान्तं कथितवान् – ''चार्वाकः

कृतयुगे कश्चन राक्षसः आसीत् । सः बदरीवने तपः करोति स्म । तदा ब्रह्मा प्रत्यक्षः अभवत् । ब्रह्मद्वारा - 'ब्राह्मणेभ्यः ऋते, इतरे मां न मारयेयुः' इति वरं प्राप्तवान् आसीत् सः'' इति ।

अनन्तरं यथाविधि युधिष्ठिरस्य राज्याभिषेकः अभवत् । धौम्यः एकां वेदिकां निर्मितवान् । तस्याः उपरि व्याघ्रचर्म प्रसारितवान् । तदुपरि युधिष्ठिरं द्रौपदीं च उपवेशितवान् । अनन्तरम् अग्निम् उत्पाद्य युधिष्ठिरद्वारा यागं कारितवान् । कृष्णः शङ्खेन युधिष्ठिरस्य अभिषेकं कृत्वा 'समस्तपृथिव्याः अधिपतिः भवतु' इति आशीर्वादं कृतवान् । धृतराष्ट्रः, अन्ये च स्वसम्पत्तिं प्रकटितवन्तः । मङ्गलवाद्यानां वादनम् अभवत् । जनैः दत्तानि उपायनानि स्वीकृतवान् युधिष्ठिरः ब्राह्मणान् सत्कृतवान् ।

अनन्तरं युधिष्ठिरः प्रजाः उद्दिश्य - ''महाजनाः !! महाराजः धृतराष्ट्रः अस्माकं सदैव पूजनीयः भवति । अस्मासु येषां विश्वासः अस्ति ते सर्वे धृतराष्ट्रस्य शासनम् अङ्गीकुर्युः । वयं धृतराष्ट्रमहाराजस्य सेवां कर्तुम् एव जीविताः स्मः । मम भवतां च राजा धृतराष्ट्रमहाराजः एव'' इति अवदत् ।

तदा युधिष्ठिरः भीमं 'युवराजः' इति घोषितवान् । विदुरं मन्त्रिपदे नियुक्तवान् । सञ्जयः कोषाध्यक्षः आप्तमार्गदर्शकः च अभवत् । नकुलः सेवकानां वेतननिर्णयं करोति स्म । अर्जुनाय राज्यस्य योगक्षेमदायित्वं दत्तम् । धौम्यः देवतानां ब्राह्मणानां च कार्यं द्रष्टुं नियुक्तः अभवत् । सहदेवः सर्वदा युधिष्ठिरेण सह भवति स्म ।

सर्वेषां दायित्वानि घोषयित्वा युद्धे मृतानां श्राद्धकर्माणि कृतानि । युधिष्ठिरः द्रोणस्य, कर्णस्य, धृष्टद्युम्नः, घटोत्कचस्य, अभिमन्योः च श्राद्धकर्म कारितवान् । धृतराष्ट्रः पुत्राणां श्राद्धकर्म कारितवान् । मृतानां स्मरणार्थं तडागाः, सरोवराणि च निर्मितानि । अनन्तरं प्रजानाम् अभिवृद्ध्यर्थं युधिष्ठिरः शासनम् आरब्धवान् ।



## परोपकारी समीरः (गताङ्कात् अनुवृत्तम्)

समीरः प्रियशुनकेन सह मङ्गलपुरं प्राप्तवान् । तद्ग्रामीणाः पिशाचभीतिग्रस्ताः आसन् । समीरः वटवृक्षसमीपे अटन्तं गोविन्दश्रेष्ठिनं दृष्टवान् ।

मङ्गलश्रेष्ठिन् ! मङ्गलश्रेष्ठिन् !

कः भवान् ? किम् इष्यते भवता ?

गोविन्दश्रेष्ठी उपवेशनार्थं संन्यासिने आसनं दत्तवान् ।

अहं जोगिन्दरस्य पुत्रः । मङ्गलश्रेष्ठी मया मेलनीयः ।

मङ्गलश्रेष्ठी मम पिता । सः तु इदानीं न जीवति । किमर्थं द्रष्टव्यः आसीत् सः ?

सः मम पितुः सकाशात् लक्षं रूप्यकाणि ऋणरूपेण स्वीकृतवान् आसीत् । तत् ऋणं प्रतिसङ्ग्रहीतुम् अहमागतः अस्मि । तत् ऋणं भवान् एव प्रतिददातु, येन अहं गच्छेयम् ।

मम पिता भवत्पितृतः किमर्थम् ऋणं स्वीकुर्यात् ? अन्यच्च, मम गृहे धनम् अपि नास्ति । भवान् एव सर्वं परिशीलयतु ।

गोविन्दश्रेष्ठी धनपेटिकाम् उद्घाट्य दर्शितवान् ।
















समीरः अग्रिमां योजनां चिन्तयन् गोविन्द-श्रेष्ठिनः गृहात् निर्गतवान् ।


यदि सः प्रेतः माम् अनुसरेत् तर्हि मया किं वा करणीयम् ?
गोविन्दश्रेष्ठी चिन्तासागरे निमग्नः


सः वटवृक्षस्य समीपं गत्वा पिशाचवेषं धृतवान् ।


इतः समग्रसम्पत्तेः अन्यत्र नयनम् एव वरम् ।


सः गर्तस्थानि धन-पात्राणि एकैकशः उपरि आनीतवान् ।


समीरः वृक्षस्य उपरि उपविश्य सर्वं पश्यन् आसीत् । स
गोविन्दश्रेष्ठिनः उपरि पतितः


पिशाचः ! अहो, पिशाचः !! मां रक्षन्तु ...


गोविन्दश्रेष्ठिनं वटवृक्षे बद्ध्वा तस्य रक्षणार्थं शुनकं भैरवं नियोजितवान् समीरः ।


मित्राणि ! मम वचनं शृण्वन्तु । पिशाचनाटकं समाप्तम् । पिशाचः कः इति किं ज्ञातुम् इच्छन्ति भवन्तः ? मया सह आगच्छन्तु ।


अस्माकम् आपणिकः एव पिशाचः !!
गोविन्दश्रेष्ठी ! एषः एव पिशाचः आसीत् !
अहो, विचित्रं नाटकम् ! पिशाचत्वं प्राप्नोतु एषः !


अन्यायमार्गम् अवलम्ब्य पित्रा यत् सम्पादितं तस्य रक्षणार्थं गोविन्दश्रेष्ठी अपि तादृशम् एव मार्गम् अवलम्बमानः वटवृक्षस्य अधः धनं गोपितवान् । पिशाचकथां सृष्ट्वा भवतः सर्वान् वञ्चितवान् सः । यावत् भवन्तः भूत-प्रेतादिभ्यः भीताः भवन्ति तावत् एतादृशाः भवतः सर्वान् वञ्चयन्ति । जीवने विवेकः धैर्यं च अवलम्बनीयम् । भवतां जीवनं सुखमयं भवतु ।...
-समाप्तम्
(अग्रिमे मासे अपरा साहसकथा)



# सुवर्णनिर्माणम्

केभ्यश्चित् वर्षेभ्यः पूर्वं कपिशानगरे माधवनामकः कश्चित् धनिकः आसीत्। तस्य श्वशुरः अपि महाधनिकः एव। अतः माधवेन धनसम्पादनार्थं कोऽपि प्रयत्नः करणीयः न आसीत्। तथापि माधवः कार्यरहितः स्थातुं न इच्छति स्म। रसविद्यया सुवर्णनिर्माणं शक्यम् इति तेन श्रुतम् आसीत्। अतः सः ताम्रं सुवर्णरूपेण परिवर्तयितुम् इच्छति स्म। तदर्थं तेन बहवः प्रयोगाः कृताः, महान् धनव्ययः अपि कृतः। एतत्कारणतः सः केषुचित् एव वर्षेषु निर्धनः अभवत्।

माधवस्य पत्नी विवेकिनी। तया चिन्तितं – 'मम पतिः सुवर्णनिर्माणस्य विषये एव चिन्तयन् सर्वं नाशयन् अस्ति। एतस्य मूर्खतायाः कारणतः कुटुम्बस्य एव नाशः भवेत्। इदानीम् अपि यदि अहं मौनेन तिष्ठेयं तर्हि मम कुटुम्बं भगवान् अपि रक्षितुं न शक्नुयात्। एतदर्थं मया कोऽपि उपायः अचिरात् एव चिन्तनीयः। महता प्रयत्नेन वा मम परिवारस्य रक्षणं करणीयम् एव' इति।

अतः सा गार्हस्थ्यस्य निर्वहणे आसक्तिं दर्शितवती। पतिं जागरूकतावचनानि बोधितवती। किन्तु माधवः तत् न लक्षितवान्। अतः तदीया सर्वा सम्पत् कर्पूरवत् अदृश्या अभवत्। तथापि माधवः पत्नीं वदति स्म – ''कोलाहलं मा करोतु। सुवर्णनिर्माणस्य मम प्रयोगः सद्यः एव समाप्तः भविष्यति। ततः वयं महाधनिकाः भविष्यामः'' इति।

माधवस्य पत्न्याः स्थितिः शोचनीया अभवत्। सा मातृगृहं गत्वा प्रवृत्तं सर्वं पितरं निवेदितवती। तदा तस्याः पिता – ''अहं जामात्रा सह वार्तालापं करिष्यामि। भवती चिन्तां न करोतु'' इति अवदत्।

अथ कदाचित् श्वशुरस्य निमन्त्रणं प्राप्य माधवः श्वशुरगृहं गतवान्। तदा श्वशुरः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

अपृच्छत् - ''किं भोः ? भवतः प्रयोगाः समाप्ताः किम् ?'' इति ।

अत्यन्तम् उत्साहेन माधवः आत्मना कृतान् प्रयोगान् विवृतवान् ।

तदा श्वशुरः उक्तवान् - ''हन्त ! भवान् प्रधानं विषयं विस्मृत्य इतस्ततः सञ्चरन् अस्ति खलु । भवता अहं प्रष्टव्यः आसम् । अहम् अपि तां विद्यां किञ्चित्प्रमाणेन जानामि । मया अपि तस्मिन् विषये अध्ययनं कृतम् अस्ति । भवता स्वीकृतं कार्यं तावत् सरलं न । महत्या सहनया भवता एतत् कार्यं साधनीयम् । अहं तु वृद्धः अभवम् । अहं परिश्रमं कर्तुं न शक्नोमि । अतः अहं यत् रहस्यं जानामि तत् भवन्तं वदामि । मम कथनानुसारं करोतु । ततः भवान् सुवर्णनिर्माता भविष्यति'' इति ।

''भवतः कथनानुसारम् अहम् एतत् कार्यम् अवश्यं करिष्यामि । लक्ष्यप्राप्तिपर्यन्तं न विरमिष्यामि'' इति भक्त्या अवदत् माधवः ।

तदा माधवस्य श्वशुरः अवदत् - ''ताम्रं सुवर्णरूपेण परिणमयितुं यद्यत् आवश्यकं तत् सर्वं मम समीपे अस्ति, किन्तु एकं विहाय । यत् मम समीपे नास्ति तस्य सम्पादने महान् श्रमः करणीयः। किन्तु तस्य प्राप्तिः सर्वथा अशक्या तु न'' इति ।

माधवः अत्यन्तं कुतूहलेन - ''किं तत् वस्तु ? शीघ्रं वदतु तावत्'' इति अवदत् ।

तदा श्वशुरः अवदत् - ''न तथा विशिष्टं तत् । कदलीपर्णानां पृष्ठभागे धूलिकणाः ये भवन्ति तान् भवान् दृष्टवान् खलु ? सा



कदलीधूलिः एककिलोपरिमिता सङ्ग्रहीतव्या । किन्तु तत्र एकमेव कष्टं नाम तस्याः सङ्ग्रहणं मन्त्रपठनपूर्वकं भवता स्वहस्तेन आरोपितेभ्यः कदलीसस्येभ्यः एव करणीयम् । मन्त्रं तु अहं बोधयिष्यामि'' इति ।

''एतदर्थं बहूनि सस्यानि आरोपणीयानि भवेयुः खलु'' इति पृष्टवान् माधवः ।

''अत्र कः सन्देहः ? विशाले क्षेत्रे कदलीवननिर्माणं करणीयं भवेत् । नो चेत् किलोमितां कदलीधूलिं कथं प्राप्नुयात् भवान् ? तदभावे च सुवर्णनिर्माणम् अशक्यम्'' इति उक्तवान् श्वशुरः ।

भूमिं क्रीत्वा कदलीवनस्य निर्माणं कर्तुं माधवस्य श्वशुरः साहाय्यं कृतवान् । कर्मकराः भूमिं सुकृष्टां कृत्वा कदली-सस्यानाम् आरोपणार्थं गर्तान् कृतवन्तः ।




माधवः श्वशुरस्य वचनानुसारं मन्त्रं पठन् बहूनि सस्यानि आरोपितवान् । माधवस्य पत्न्या अपि बहुसाहाय्यं कृतम् । तया अपि तस्मिन् कार्ये आसक्तिः प्रदर्शिता ।

सस्यानि प्रवृद्धानि । माधवः आदिनं वने सञ्चरन् कदलीधूल्याः सङ्ग्रहणं करोति स्म । द्वित्राणां मासानाम् अनन्तरं यदा सः कदली-धूलिम् एकत्रीकृत्य तोलनं कृतवान् तदा तेन अवगतं यत् किलोमितायाः कदलीधूल्याः सङ्ग्रहार्थं वर्षाणि यावत् प्रतीक्षा करणीया भवेत्, तदर्थं महती सहनशीलता चापि अपेक्षिता इति ।

माधवस्य दृष्टिः कदलीपर्णानां धूलेः सङ्ग्रहणे एव आसीत् । तस्य पत्नी प्रतिदिनं कदलीपर्णानि, पुष्पं, फलगुच्छं च विक्रीय धनसङ्ग्रहणं करोति स्म । पत्न्याः कार्यविषये पूर्णरूपेण अनभिज्ञः आसीत् माधवः । कदा वा तावत्परिमाणककदलीधूलिः सङ्गृहीता भवेत् इत्येव तस्य चिन्ता आसीत् । सर्वदा ताम्रेण सुवर्णनिर्माणस्य स्वप्नं पश्यन् भवति स्म सः ।

त्रीणि वर्षाणि अतीतानि । किन्तु माधवः इतोऽपि लक्ष्यं न प्राप्तवान् आसीत् । तस्य पत्न्या कृतेन वाणिज्येन तस्य गृहस्य स्थितिः उत्तमा जाता आसीत् । प्रतिसप्ताहं विपणिं प्रति शकटशः फलानां पर्णानां च नयनं भवति स्म ।

पुनश्च वर्षद्वयम् अतीतम् । माधवः इदानीं

लक्ष्यं प्राप्तवान् आसीत् । सः किलोमितां कदलीधूलिं सङ्गृहीतवान् आसीत् । सः तत् श्वशुरस्य पुरतः स्थापयन् – ''स्वीकरोतु, भवतः कथनानुसारं मया एककिलोपरिमिता कदलीधूलिः सङ्गृहीता अस्ति'' इति अवदत् ।

तदा तस्य श्वशुरः जामातुः अभिनन्दनं कुर्वन् – ''साधु माधव, इतःपरं भवतः धनाभावः न भविष्यति'' इति वदन् हसितवान् । पुत्रीं पश्यन् सः अपृच्छत् – ''पुत्रि ! कदलीवनद्वारा भवत्या कियत् धनं सङ्गृहीतम् ?'' इति ।

माधवस्य पत्नी धनस्यूतम् आनीय पितुः पुरतः संस्थाप्य – ''भवान् एव गणयतु'' इति अवदत् ।

माधवेन न अवगतं यत् कदलीवनतः लाभः कथम् इति । यतः तस्य चिन्तनं तु कदलीधूल्याः सङ्ग्रहणे एव आसीत् । श्वशुरः धनं स्यूतात् निष्कास्य गणितवान् । विंशति-सहस्रं रजतरूप्यकाणि तत्र आसन् । तत् धनं दृष्ट्वा माधवः नितराम् आश्चर्यचकितः अभवत् ।

''मम उपायः कथम् आसीत् ? यदि भवान् इच्छति तर्हि एतैः रजतनाणकैः सुवर्णं क्रेतुं शक्नोति । आभरणानि कारयितुं चापि शक्नोति । गतेषु पञ्चसु वर्षेषु भवता यः परिश्रमः कृतः तस्य फलं भवान् प्राप्तवान् अस्ति । भवतः रासायनिकप्रयोगात् अपि एषः प्रयोगः एव उत्तमः इति भाति मम'' इति अवदत् माधवस्य श्वशुरः ।

तदा माधवः वास्तविकताम् अवगतवान् – 'अद्यपर्यन्तं सुवर्णनिर्माणार्थं मया कृताः प्रयासाः व्यर्थाः । वायौ चित्राणि रचयन् आसम् अहम् । एवमेव परिस्थितेः अनुवर्तनं यदि अभविष्यत् तर्हि मम कुटुम्बस्य नाशः अभविष्यत्' इति ।

माधवस्य श्वशुरेण यद्यपि माधवः वञ्चितः आसीत्, तथाऽपि तेन उत्तमः पाठः पाठितः आसीत् । माधवः तु एतेन लाभान्वितः अभवत् । कामधेनुसदृशे वने सति धनस्य न्यूनता कुत्र ? सः श्वशुरं क्षमां याचित्वा कृतज्ञतां प्रकटितवान् । ततः माधवः कदली-वनस्य योगक्षेमं निर्वहन् सुखेन दिनानि यापितवान् ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

चन्दमामायां भारतीयमहात्मनां विषये तदा तदा कथाः प्रकाश्यन्ते एव । चलनचित्र-दूरदर्शनादिद्वारा अपि भवन्तः तादृशानां जीवनकथाम् अवगतवन्तः स्युः । किं ताः स्मर्यन्ते ? तेषां जीवनं सिद्धीः च अवलम्ब्य अत्र केचन प्रश्नाः सज्जीकृताः सन्ति । आत्मानं परीक्षन्तां भवन्तः ।

१. सा राज्ञी का, या च स्वस्य वैभवोपेतजीवनं परित्यज्य श्रीकृष्णस्य परमभक्ता जाता ?
२. अपरः कृष्णभक्तः कविः सन् सर्वदा स्तुतिपराणि गीतानि गायन् भवति स्म । स तु अन्धः आसीत् । सः कः ?
३. बङ्गालराज्ये भक्तिमार्गस्य जनप्रियतां कः सम्पादितवान् ?
४. आदिशङ्कराचार्यः पञ्च मठान् कुत्र कुत्र प्रतिष्ठापितवान् ?
५. सुब्रह्मण्यस्वामिनः (मुरुगः इति तस्य नामान्तरम्) परमभक्ता तमिळुकवयित्री का ?
६. सर्वधर्मसमभावे विश्वासं वहन् सः श्रेष्ठः मुस्लिंसज्जनः कः ?
७. अहमदनगरसमीपे स्थिते कस्मिंश्चित् स्थले जाते महात्मनि हिन्दवः मुस्लिमाः च श्रद्धावन्तः आसन् । सः कः ?
८. श्रीपेरम्बदूरुशब्दस्य स्मरणात् वयं तत्र जातां राजीवगान्धिवर्यस्य घोरहत्यां स्मरामः । वस्तुतः तु तत् स्थलं कस्यचित् महात्मनः जन्मस्थानम् । सः कः ?

*(उत्तराणि अग्रिमे मासे)*

### फेब्रवरीप्रश्नावल्याः उत्तराणि

१. रजियासुल्ताना इति । चत्वारि वर्षाणि ।
२. मदर् थेरेसा ।
३. प्रधानमन्त्रिणी श्रीमती इन्दिरागान्धिः ।
४. राजकुमारी अमृता कौर । सा स्वास्थ्य-मन्त्रिणी आसीत् ।
५. केप्टन् लक्ष्मीः ।
६. डा॰ आनि बेसेण्ट् ।
७. नर्गीस् दत्त ।
८. एम्. एस्. सुब्बलक्ष्मीः ।
९. अरुन्धतीराय् 'दि गोड् आफ् स्माल् थिङ्ग्स्' इत्येतस्यै कृत्यै ।
१०. आशापूर्णा देवी, 'प्रथमप्रतिश्रुति' नामिकायै बङ्गालीकृत्यै ।
११. अमृता शेर् गिल् ।
१२. लतामङ्गेशकरवर्यायाः, अधिकसङ्ख्यया चलनचित्रगीतानि गीतानि इत्यतः ।

# सम्पत्तेः विभागः

कस्यचित् वणिजः उभौ पुत्रौ आस्ताम् । तयोः ज्येष्ठः परमस्वार्थी, कनिष्ठः मुग्धः । 'मम मरणस्य अनन्तरं ज्येष्ठः पुत्रः कनिष्ठपुत्रं वञ्चयितुम् अर्हति' इति विचिन्त्य सः वणिक् स्वस्य समग्रां सम्पत्तिं गोणीद्वये पूरितवान् । मरणसमये सः पुत्रौ आहूय उक्तवान् - ''वत्सौ ! मम सम्पत्तिः गोणीद्वये पूरिता अस्ति । पश्चिमदिशि स्थिते प्रकोष्ठे स्थापिता च अस्ति । एकैकः एकैकां गोणीं स्वीकृत्य सम्पत्तेः उपयोगं करोतु'' इति ।

वणिक् दिवं गतः । श्राद्धस्य अनन्तरं ज्येष्ठपुत्रः प्रकोष्ठं गत्वा गोणीद्वयम् अपि उद्घाटितवान् । एकस्यां गोण्याम् उपरि रजतनाणकानि, अधः मृद्गोलकानि च आसन् । अपरस्याम् उपरि मृद्गोलकानि, अधः रजतनाणकानि च आसन् । पित्रा एवं किमर्थं कृतम् इति ज्येष्ठपुत्रेण न ज्ञातम् । अतः सः सर्वाणि रजतनाणकानि एकस्यां गोण्यां, मृद्गोलकानि अपरस्यां गोण्यां च पूरितवान् । अनन्तरदिने अनुजम् आहूय - ''सहोदर, एकैकेन एकैका गोणी स्वीकरणीया इति खलु पित्रा उक्तम् ? अहम् एकां स्वीकरोमि, भवान् अपरां स्वीकरोतु'' इति उक्त्वा रजतनाणकगोणीं स्वीकृत्य मृद्गोलकगोणीम् अनुजाय दत्तवान् ।

अनुजः 'गोण्यां मृद्गोलकानि किमर्थं स्थापितानि ?' इति चिन्तयन् एकं मृद्गोलकं भञ्जितवान् । तत्र सुवर्णनाणकम् आसीत् । अन्यानि अपि मृद्गोलकानि तेन भञ्जितानि । तेषु सर्वेषु अपि सुवर्णनाणकानि एव आसन् ।

एवं सज्जनः अनुजः सुवर्णनाणकानि प्राप्तवान् । वञ्चकेन अग्रजेन तु रजतनाणकानि प्राप्तानि ।





# अस्पृश्यः

पवित्रायाः गोदावर्याः तीरे कश्चन संन्यासी वसति स्म । निकटस्थाः ग्रामवासिनः तस्य विषये आदरवन्तः आसन् । एतादृशस्य महासंन्यासिनः सहवासः लब्धः इत्यतः तेषाम् आनन्दस्य पारम् एव न आसीत् । संन्यासिनः आवश्यकताः पूरयितुं ते सर्वदा सज्जाः तिष्ठन्ति स्म ।

संन्यासी प्रतिदिनम् उषसि एव उत्थाय स्नानार्थं नदीं गच्छति स्म । स्नानं समाप्य नद्याः तीरे विद्यमानायाः शिलायाः उपरि उपविश्य ध्यानमग्नः भवति स्म । तेन पूर्वमेव सूचितम् आसीत् – ''ध्यानसमये केऽपि अत्र न आगच्छेयुः । ध्यानभङ्गं न कुर्युः'' इति ।

अतः ग्रामीणाः संन्यासिनः ध्यानसमये नदीसमीपमपि न गच्छन्ति स्म । स्नानं करणीयं चेत् दूरं गत्वा स्नानं कुर्वन्ति स्म ।

एकदा सः संन्यासी स्नानं कृत्वा शिलायाः उपरि उपविश्य ध्यानमग्नः आसीत् । तदा एव कश्चित् नद्यां कूर्दनं कृतवान् । आश्चर्यचकितः संन्यासी नेत्रे उन्मील्य दृष्टवान् । तत्र कश्चन बालकः महता उत्साहेन स्नानं कुर्वन् आसीत् । सः वेगेन पाणिपादं चालयति स्म इत्यतः जलबिन्दवः संन्यासिनः उपरि पतन्ति स्म । एतस्मात् क्रुद्धः संन्यासी – ''रे दुष्ट, दुरहङ्कारिन्, किं भवान् अन्धः ? ध्यानमग्नः अहं भवता किं न दृश्ये ?'' इति अवदत् ।

तरन् बालकः संन्यासिनः वचनं न श्रुतवान् एव । यतः सः आनन्देन तरणं कुर्वन् स्वकल्पनालोके एव विहरन् आसीत् । अन्यच्च, तरणशब्दकारणतः संन्यासिनः वचनानि स्पष्टरूपेण न श्रुतानि तेन ।

यदा सः बालकः स्नानं समाप्य तीरम् आगतवान् तदा संन्यासी तस्य समीपं गत्वा कपोलाभ्यां चपेटिकां दत्त्वा –'पिशाचः भवान्' इति तर्जितवान् ।

तावता कश्चित् वेगेन श्वासोच्छ्वासं कुर्वन्

धावन् तत्र आगतवान् । संन्यासितः दूरे तिष्ठन् सः बद्धाञ्जलिः अवदत् - ''स्वामिन्, क्षमां करोतु । एषः मम पत्न्याः अनुजः । अन्य-स्थानतः अत्र आगतवान् अस्ति । भवतः ध्यानस्य विषयं सर्वथा न जानाति एषः । एषः गृहे न दृष्टः इत्यतः अन्विष्यन् अत्र आगतवान् अहम् । यतः एषः तरणं बहु इच्छति इति अहं जानामि स्म । मया चिन्तितम् अवितथम् एव अभवत् । एषः अत्र एव आगतवान् अस्ति । अहं मनसि एव चिन्तयन् आसं यत् भवतः ध्यानभङ्गं तु न कुर्यात् खलु एषः इति । मम अत्र आगमने विलम्बः अभवत् । कृपया क्षम्यताम्'' इति ।

तदा सः संन्यासी - ''किम् एषः भवतः श्यालः ?'' इति वदन् झटिति नदीं गत्वा स्नात्वा प्रत्यागतः । यतः तेन ज्ञातम् आसीत् यत् आगतः युवकः अस्पृश्यः, तस्य श्यालः एषः बालकः अपि अस्पृश्यः एव इति ।

बालकः प्रवर्तमानं सर्वं मौनेन पश्यन् आसीत् । सः बालकः अपि नद्यां कूर्दनं कृत्वा स्नानम् आरब्धवान् । यदा सः तीरम् आगतवान् तस्य आवुत्तः तम् अपृच्छत् - ''भवान् पुनः किमर्थं स्नातवान् ?'' इति ।

तदा सः बालकः - ''सकृत् स्नानं कृतवान् अपि संन्यासी पुनश्च किमर्थं स्नानं कृतवान् ?'' इति अपृच्छत् ।

तदा सः युवकः अवदत् - ''वयम् अस्पृश्याः इति भवान् किं विस्मृतवान् ? चपेटिकादानसमये तेन भवान् स्पृष्टः । अतः पुनश्च तेन स्नानं कृतम्'' इति ।

तदा सः बालकः - ''मम कपोलाभ्यां यदा सः चपेटिकां यच्छन् आसीत् तदा राक्षसः इव मया दृष्टः सः । राक्षसः अपि अस्पृश्यः खलु ? अतः अहम् अपि पुनश्च स्नानम् अकरवम्'' इति अवदत् ।

बालकस्य वचनं श्रुत्वा चपेटिकाप्रहारम् अनुभूतवान् इव संन्यासी क्षणं यावत् किङ्कर्तव्यतामूढः अभवत् । अनन्तरं सः बालकस्य समीपं गत्वा - ''वत्स, सत्यम् उक्तं भवता । अविवेकः मम मतिम् आवृतवान् आसीत् । अहङ्कार-क्रोधौ मां वशीकृतवन्तौ आस्ताम् । अस्पृश्यः भवान् न, अपि तु अहम् एव'' इति वदन् तं बालं प्रीत्या आलिङ्गितवान् ।






# चित्रशीर्षिकास्पर्धा





**अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा** (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ ताः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जनवरी'मासीयस्पर्धाशीर्षिकाप्रेषिका-

**डि. शुभा**

'चेतना' शारदाम्बानगरम्
जालहळ्ळि, बेङ्गलूरु - ५६० ०३१ कर्णाटकम्

### पुरस्कृतशीर्षिका



**दीपानुदीप्याहम् अन्धकारं वारयामि ।**
**रङ्गवल्लीं विलिख्याहं गृहशोभां वर्धयामि ।**

# CHANDAMAMA

## IS GOING PLACES



**You have read Vetala stories in Chandamama for the last 53 years**

Now you can see

*Vetala on the Net*

*And many more goodies from Chandamama*

**Visit**

**www.schoolnetindia.com**

